शतयूपाश्रमे तस्मिन्निवासमकरोत्तदा ॥ १२
तस्मै सर्वं विधिं राजन्राजाचख्यौ महामतिः ।
आरण्यकं महाराज व्यासस्यानुमते तदा ॥ १३
एवं स तपसा राजा धृतराष्ट्रो महामनाः ।
योजयामास चात्मानं तांश्चाप्यनुचरांस्तदा ॥ १४
तथैव देवी गान्धारी वल्कलाजिनवासिनी ।
कुन्त्या सह महाराज समानव्रतचारिणी ॥ १५
कर्मणा मनसा वाचा चक्षुषा चापि ते नृप ।
संनियम्येन्द्रियग्राममास्थिताः परमं तपः ॥ १६

त्वगस्थिभूतः परिशुष्कमांसो
जटाजिनी वल्कलसंवृताङ्गः ।
स पार्थिवस्तत्र तपश्चचार
महर्षिवत्तीव्रमपेतदोषः ॥ १७
क्षत्ता च धर्मार्थविदग्र्यबुद्धिः
ससंजयस्तं नृपतिं सदारम् ।
उपाचरद्घोरतपो जितात्मा
तदा कृशो वल्कलचीरवासाः ॥ १८

इति श्रीमहाभारते आश्रमवासपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

---

13 $^{a}$) $K_{3.5}$ ततः (for तस्मै). $B_{1.5}$ $G_{3.4}$ सर्व- (for सर्वं). $K_{4}$ $B_{1.2.4-6}$ Dn $D_{1-3.7.9}$ राज्ञे (for राजन्). — $^{b}$) $D_{3}$ महीपतिः (for महामतिः). K $T_{2.4}$ G M आ($K_{4}$ व्या)चख्यौ ($K_{3}$ °ख्ये) स नृपस्तदा; $D_{4.6}$ आख्यौ स नृपतिस्तदा; $D_{5.8}$ $T_{3}$ आचख्यौ नृपतिस्तदा. — $D_{4.6.8}$ om. (hapl.) $13^{c}$–$14^{d}$. $T_{3}$ om. $13^{cd}$. — $^{c}$) $D_{5}$ $T_{4}$ $G_{3}$ $M_{5}$ महातेजा; $T_{2}$ °प्राज्ञ; $G_{1.5}$ $M_{1-4}$ °प्राज्ञो (for °राज).

14 $D_{4.6.8}$ om. 14 (cf. v. l. 13). $K_{1.2}$ om. (hapl.) 14. — $^{a}$) $K_{4}$ transp. एवं and स. $G_{3}$ राजन् (for राजा). $K_{3.5}$ एवं स तापसो जातो. — $^{c}$) $K_{3}$ याजयामास (for योज°). — $^{d}$) $K_{3.5}$ एव (for अपि). $K_{3-5}$ $B_{6}$ $D_{3.5}$ $T_{2-4}$ $M_{5}$ तथा (for तदा).

15 $^{a}$) $D_{4.6}$ $T_{3.4}$ तदा (for तथा). — $^{b}$) $K_{4}$ -संवृता; Dn $D_{2}$ -धारिणी (for -वासिनी). — $^{d}$) $D_{5}$ $T_{3}$ $G_{4}$ [अ]समान- (sic) (for समान-).

16 $^{b}$) $K_{3-5}$ $B_{1.2.4.5}$ Dn $D_{1-3.9}$ चैव; $G_{3.4}$ वापि (for चापि). $K_{3}$ $D_{1}$ वै (for ते). $K_{1.2}$ $D_{5}$ [ऽ]नव (for नृप). $B_{6}$ चक्षुषापि च तेनघ; $D_{4.6-8}$ $G_{1.2}$ चक्षुषापि ततो नृपः ($G_{1}$ °प). — $^{c}$) = 6. 34. $4^{a}$. — $^{d}$) $K_{2.3}$ $Dn_{2}$ $D_{1.4.8}$ $T_{2}$ $G_{1.2}$ $M_{3}$ आस्थितः; $K_{4}$ $B_{1.2.4.5}$ $Dn_{1}$ $D_{2.3.9}$ $M_{4}$ आस्थिते; $D_{6}$ °तं (for °ताः).

17 $^{a}$) $D_{4-8}$ $T_{2-4}$ $G_{1-4}$ -शेषः (for -भूतः). — $^{b}$) $D_{4.6-8}$ $G_{1.2}$ जटाधरो; $D_{5}$ कृष्णाजिनी; $T_{4}$ जवीजवी (sic); $M_{4}$ जटाजनी (for °जिनी). — $D_{9}$ om. $17^{c}$–$18^{d}$. — $^{c}$) $K_{1}$ चकार (for चचार). — $^{d}$) $T_{2}$ राजर्षिवत् (for मह°). $B_{1.2.4.5}$ Dn $D_{1-3}$ अपेतमोहः; $T_{3}$ °रोषः; $G_{3}$ °दोषं (for °दोषः).

18 $D_{9}$ om. 18 (cf. v. l. 17). — $^{a}$) $K_{3}$ $D_{4.6.8}$ $T_{4}$ $G_{3}$ -विदग्रबुद्धिः; $K_{4}$ $B_{1.6}$ $M_{3.5}$ -विदग्ध° (for -विदग्र्य°). — $^{b}$) $K_{2}$ च सादरं (for सदारम्). — $^{c}$) $K_{1.2}$ $T_{2}$ $G_{5}$ $M_{1.2}$ घोरतपा; $G_{3.4}$ °तरो (for °तपो). $T_{2.3}$ $M_{1}$ महात्मा (for जितात्मा). $K_{3-5}$ उपाचरच्चापि जितांतरात्मा. — $^{d}$) $D_{5}$ $T_{3.4}$ तथा (for तदा). $K_{5}$ $B_{2}$ $D_{3}$ -चीरवाससा (for °वासाः).

Colophon om. in $T_{1}$. — *Adhy. name*: $K_{1}$ व्यासाश्रमागमनं. — *Adhy. no.* (figures, words or both): $K_{4.5}$ $D_{4.6.8}$ $T_{2}$ $G_{1.2.5}$ $M_{1-4}$ 24; $Dn_{2}$ 19; $D_{1}$ 20; $D_{5}$ $T_{3.4}$ $G_{3.4}$ $M_{5}$ 25 (as in text). — *Śloka no.*: $K_{4}$ 15; $K_{5}$ 30; $D_{9}$ 17.

# २६

वैशंपायन उवाच ।
ततस्तस्मिन्मुनिश्रेष्ठा राजानं द्रष्टुमभ्ययुः ।
नारदः पर्वतश्चैव देवलश्च महातपाः ॥ १
द्वैपायनः सशिष्यश्च सिद्धाश्चान्ये मनीषिणः ।
शतयूपश्च राजर्षिर्वृद्धः परमधार्मिकः ॥ २
तेषां कुन्ती महाराज पूजां चक्रे यथाविधि ।
ते चापि तुतुषुस्तस्यास्तापसाः परिचर्यया ॥ ३
तत्र धर्म्याः कथास्तात चक्रुस्ते परमर्षयः ।
रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपम् ॥ ४
कथान्तरे तु कस्मिंश्चिद्देवर्षिर्नारदस्तदा ।
कथामिमामकथयत्सर्वप्रत्यक्षदर्शिवान् ॥ ५
पुरा प्रजापतिसमो राजासीदकुतोभयः ।
सहस्रचित्य इत्युक्तः शतयूपपितामहः ॥ ६
स पुत्रे राज्यमासज्य ज्येष्ठे परमधार्मिके ।
सहस्रचित्यो धर्मात्मा प्रविवेश वनं नृपः ॥ ७
स गत्वा तपसः पारं दीप्तस्य स नराधिपः ।
पुरंदरस्य संस्थानं प्रतिपेदे महामनाः ॥ ८
दृष्टपूर्वः स बहुशो राजन्संपतता मया ।

## 26

☞ This adhy. is missing in $Ś_1$ $B_3$ ( cf. v. l. 15. 3. 3; 22. 1 ).

1 $^{a}$) $B_{1, 2, 4, 5}$ Dn $D_{1-3, 9}$ $T_1$ तत्र ( for तस्मिन् ). $B_6$ ऋषिश्रेष्ठा; $D_8$ मुनिश्रेष्ठं ( for °श्रेष्ठा ). — $^{b}$) $K_{1, 2}$ आययुः; $K_4$ $B_4$ अन्वयुः ( for अभ्ययुः ).

2 Before 2, $T_4$ ins. वैशंपायनः. — $^{a}$) $K_4$ द्वैपायनं सशिष्यं च. — $^{b}$) $D_1$ सिध्यांश् ( sic ); $D_9$ शिष्याश् ( for सिद्धाश् ). $K_{1, 2}$ $M_8$ [अ]प्यन्ये चापि ( for सिद्धाश्चान्ये ). $D_{4, 6, 8}$ $T_{2, 3}$ $G_{1, 2, 5}$ $M_{1-4}$ महर्षयः ( for मनीषिणः ). — $D_{4, 6, 8}$ om. $2^{cd}$.

3 $^{b}$) $K_5$ यथा विधिः. — $^{c}$) $K_5$ तुष्टुवुस्; $B_2$ तत्रसुस् ( sic ) ( for तुतुषुस् ). $D_5$ $T_4$ $G_{3, 4}$ $M_5$ सर्वे ( for तस्यास् ). $D_{4, 6, 8}$ $T_{2, 3}$ $G_{1, 2, 5}$ $M_{1-4}$ तस्यास्ते तुतुषुः ( $T_2$ $G_{1, 2}$ °ष्टुवुः ) सर्वे; $T_1$ ते चापि जहृषुः सर्वे. — $^{d}$) $K_1$ $D_{4, 6}$ तपसा; $G_5$ $M_{1-4}$ साधवः ( for तापसाः ).

4 $^{a}$) $K_{3, 4}$ $D_1$ $M_2$ धर्म-; $B_4$ $G_2$ धर्माः ( for धर्म्याः ). $K_{3-5}$ पुण्याश्; $B_2$ $D_9$ तास्ताश्; $G_3$ तत्र ( for तात ). — $^{c}$) $K_2$ रमयंश्च; $D_5$ दमयंतो; $T_1$ आश्वासितुं ( for रमयन्तो ). $D_8$ $T_2$ $G_{1, 2}$ महात्मानो ( for °त्मानं ). — $^{d}$) $K_4$ धृतराष्ट्रो. $K_3$ जनेश्वरं; $B_2$ नराधिपं; $D_9$ जनाधिप ( for °धिपम् ).

5 $^{a}$) $T_1$ कथांतेपि तु; $T_3$ कथांतरेषु ( for °रे तु ). $K_1$ तस्मिंश्च ( for कस्मिंश्चिद् ). — $^{b}$) $K_{4, 5}$ $B_{2, 5, 6}$ $D_{5, 6, 8, 9}$ $T_{1, 4}$ $M_{3, 5}$ तथा; $B_{1, 4}$ Dn $D_{1, 2, 7}$ ततः ( for तदा ). — $^{d}$) $K_{1, 2}$ -दर्शनः ( for -दर्शिवान् ).

6 $^{a}$) $B_{1, 2, 4-6}$ Dn $D_{1-3, 7, 9}$ केक( $D_1$ कैके )याधिपतिः श्रीमान्; $G_2$ पुरा प्रजापतिः सोमो. — $^{c}$) $K_{1-3}$ $D_{1, 2}$ सहस्रचित्य; $K_4$ °चित्र्य ( for °चित्य ). — $^{d}$) शतचित्य-; $G_{3, 4}$ °चित्य- ( for °यूप- ). $D_5$ $T_1$ शतचित्यपितामहः.

7 $K_{3, 5}$ repeat 7 after $10^{ab}$. — $^{a}$) $K_3$ ( first time ) आसाद्य; $D_5$ आवेश्य ( for आसज्य ). — $^{b}$) $M_4$ om. from धार्मिके up to दग्ध ( in $9^{d}$ ). — $^{c}$) $D_1$ सहस्रचित्यो. — $^{d}$) $B_2$ महावनं ( for वनं नृपः ). — For $7^{cd}$, $K_{3, 5}$ $D_{4-6, 8}$ S ( $M_4$ om. ) subst. :

46* वनं विवेश धर्मात्मा शतचित्यो महीपतिः ।

[ $K_{3, 5}$ ( both first time ) शतचित्यो; $T_3$ °चित्ये; $G_4$ °जित्यो ( for °चित्यो ). $K_3$ ( second time ) महेंद्रसदनं गतः; $K_5$ ( second time ) तपसे धृतमानसः; $M_3$ शतयूपपितामहः ( for the post. half ). ]

8 $M_4$ om. 8 ( cf. v. l. 7 ). $K_3$ $T_4$ om. $8^{ab}$. — $^{b}$) $T_3$ दीप्तः स; $G_1$ दीप्तस्तु ( for दीप्तस्य ). $K_4$ $D_7$ च ( for स ). $K_1$ $D_{4-6, 8}$ $T_{1, 2}$ G $M_{1-3, 5}$ पृथिवीपतिः; $K_5$ च जनाधिप; $B_{2, 5, 6}$ $D_{3, 9}$ वसुधाधिपः ( for स नराधिपः ). $D_1$ दीप्तः स वसुधाधिपः. — $^{c}$) $K_{1, 3, 5}$ $G_{3-5}$ $M_{1, 2, 5}$ पुरंदरसमं स्थानं; $D_{4-6, 8}$ T $G_{1, 2}$ स पुरंदरसंस्थानं. — $^{d}$) $T_3$ संप्रपेदे ( for प्रति° ). $K_{3-5}$ $B_6$ $D_5$ $T_{1, 4}$ $G_{3, 4}$ $M_3$ महातपाः; $B_{1, 2, 4, 5}$ Dn $D_{1-3, 7, 9}$ °द्युतिः ( for °मनाः ).

9 $M_4$ om. up to दग्ध ( in $9^{d}$ ) ( cf. v. l. 7 ).

महेन्द्रसदने राजा तपसा दग्धकिल्बिषः ॥ ९
तथा शैलालयो राजा भगदत्तपितामहः ।
तपोबलेनैव नृपो महेन्द्रसदनं गतः ॥ १०
तथा पृषध्रो नामासीद्राजा वज्रधरोपमः ।
स चापि तपसा लेभे नाकपृष्ठमितो नृपः ॥ ११
अस्मिन्नरण्ये नृपते मान्धातुरपि चात्मजः ।
पुरुकुत्सो नृपः सिद्धिं महतीं समवाप्तवान् ॥ १२
भार्या समभवद्यस्य नर्मदा सरितां वरा ।
सोऽस्मिन्नरण्ये नृपतिस्तपस्तप्त्वा दिवं गतः ॥ १३
शशलोमा च नामासीद्राजा परमधार्मिकः ।
स चाप्यस्मिन्वने तप्त्वा तपो दिवमवाप्तवान् ॥ १४
द्वैपायनप्रसादाच्च त्वमपीदं तपोवनम् ।
राजन्नवाप्य दुष्प्रापां सिद्धिमग्र्यां गमिष्यसि ॥ १५
त्वं चापि राजशार्दूल तपसोऽन्ते श्रिया वृतः ।
गान्धारीसहितो गन्ता गतिं तेषां महात्मनाम् ॥ १६
पाण्डुः स्मरति नित्यं च बलहन्तुः समीपतः ।

---

— $^{a}$) $D_{5}$ $T_{1,4}$ $G_{3,4}$ ज्ञात- (for दृष्ट-). $D_{2,7}$ $G_{1}$ $M_{1}$ -पूर्वः सु-; $T_{3}$ -पूर्वस्य (for -पूर्वः स). $D_{5}$ बहुलो (for °शो). $K_{3-5}$ स दृष्टपूर्वो बहुशो. — $^{b}$) $K_{3-5}$ $D_{1,4-8}$ T $G_{2,3,5}$ $M_{1-3,5}$ राजा (for राजन्). $B_{5}$ $G_{3}$ संतपता; $T_{3}$ संचरता (for संपतता). $G_{4}$ राजा संतपनान्मया. — $^{c}$) $T_{1}$ माहेंद्र-. $K_{4}$ -सदृशो; $D_{1}$ -भवने (for -सदने). $K_{3,4}$ $D_{5}$ $T_{1,4}$ $G_{3}$ राजंस् (for राजा). — $^{d}$) $M_{4}$ -किल्मिषः (for -किल्बिषः).

10 $^{a}$) $G_{5}$ $M_{1,2}$ यथा (for तथा). $T_{1}$ शैललयो; $G_{1,3}$ शैवा($G_{3}$ °व)लयो; $G_{4}$ तु शैलयो (for शैलालयो). $K_{4}$ राजन् (for राजा). — After $10^{ab}$, $K_{3,5}$ repeat 7. — $^{c}$) $G_{2}$ ततो (for तपो-). $D_{6}$ om. (hapl.) from. नृपो up to पुरुकुत्सो (in $12^{c}$). $K_{1}$ महता; $D_{5}$ [ए]व पृष्ठो (sic) (for [ए]व नृपो). — $^{d}$) $K_{1,2}$ -भवनं (for -सदनं).

11 $D_{6}$ om. 11 (cf. v. l. 10). $B_{5}$ om. (hapl.) 11–13. — $^{a}$) $T_{2,3}$ $G_{1}$ तदा; $M_{1}$ ततो (for तथा). $K_{1}$ पृषश्रो; $K_{2}$ पृष्टोप्र-(sic); $K_{3}$ वृषधो; $K_{4}$ वृषद्धो; $D_{1}$ $M_{3}$ पृषध्र-; $D_{4,8}$ $G_{1,2}$ प्रवृद्धो; $T_{1}$ पृषद्रुर्; $T_{2}$ प्रथग्वृचों (sic); $G_{3}$ प्रभद्रो; $G_{4}$ पूषद्रो; $M_{1}$ वृषध्रो (for पृषध्रो). $B_{1,4}$ Dn $D_{2,7}$ $M_{4}$ राजा; $D_{5}$ $T_{1,4}$ $G_{3}$ $M_{5}$ नाम्ना (for नाम). — $^{b}$) $K_{2}$ $B_{1,4}$ Dn $D_{2,7}$ $M_{3}$ राजन्;. $B_{2}$ नाम्ना (for राजा). $D_{1,3}$ चक्रधरो (for वज्र°). — $^{c}$) $K_{2}$ चाति- (for चापि). $B_{1,4}$ Dn $D_{2,3,7,9}$ यातो; $B_{2}$ $D_{1}$ जातो (for लेभे). — $^{d}$) $K_{4,5}$ $T_{1}$ गतः; $D_{9}$ $T_{2}$ $G_{3,4}$ $M_{3}$ नृप (for नृपः).

12 $D_{6}$ om. up to पुरुकुत्सो (cf. v. l. 10). $B_{5}$ om. 12 (cf. v. l. 11). — $^{a}$) $K_{2}$ $D_{1}$ $G_{4}$ नृपतेर्; $D_{4,8}$ $G_{1}$ संविद्धि; $T_{2}$ $G_{2,5}$ $M_{1-4}$ संसिद्धि (for नृपते). $T_{2}$ मांधातृ- — $^{b}$) $K_{5}$ चात्मनः; $T_{3}$ °जं (for °जः). $T_{2}$ $G_{1,2,5}$ $M_{1-4}$ नृपदात्मजः (sic). — $^{c}$) $D_{4,6,8}$ $T_{2}$ $G_{1,2,5}$ $M_{1-4}$ नृपवरो; $D_{5}$ $T_{4}$ तपन्सिद्धिं; $T_{1,3}$ $G_{3,4}$ तपःसिद्धिं (for नृपः सिद्धिं). — $^{d}$) $D_{4,6,8}$ $T_{2}$ $G_{1,2}$ महतीं सिद्धिमाप्तवान्; $G_{4}$ महत्तीव्रं समाप्तवान्.

13 Cf. Harivaṁśa B. 12. $9^{c}$–$10^{b}$; Bhāg. P. 9. 7. 2. $B_{5}$ om. 13 (cf. v. l. 11). — $^{a}$) $K_{1,3-5}$ $B_{2}$ $D_{1,6,9}$ तस्य (for यस्य).

14 $^{a}$) $K_{1}$ शललंभश्च; $K_{2}$ शशलंबश्च; $D_{5}$ शतलोमा; $G_{5}$ शललोमा; $M_{2}$ शैललोमा (for शश°). $M_{3}$ तु (for च). $B_{1,2,4-6}$ Dn $D_{1,2,4-8}$ $T_{2-4}$ $G_{1-4}$ राजासीद्; $T_{1}$ राजर्षिर्; $M_{2,5}$ नाम्नासीद् (for नामा°). $K_{3-5}$ शत($K_{5}$ °श)लोमा तथैवासीद्. — $^{b}$) $B_{1,4-6}$ Dn $D_{2,4}$ $T_{2}$ $G_{1,2}$ $M_{4,5}$ राजन्; $T_{1}$ आसीत्; $T_{3,4}$ $G_{3,4}$ नाम्ना (for राजा). — $^{c}$) B ($B_{3}$ missing) Dn $D_{1-3,7,9}$ सम्यग् (for स चापि). $K_{4}$ अरण्ये वै (for वने तप्त्वा). — $^{d}$) $K_{2}$ B ($B_{3}$ missing) D (except $D_{8}$) $T_{1,3,4}$ $G_{3,4}$ $M_{3}$ ततो (for तपो). $D_{5}$ देवम् (for दिवम्). $K_{4}$ तपस्तप्त्वा दिवं गतः.

15 $^{b}$) $K_{1,2}$ तपश्चरन् (for तपोवनम्). — $^{c}$) $T_{1}$ आसाद्य; $T_{3}$ अवाह्र (sic) (for °प्य). $K_{5}$ दुष्प्राप्यं; $D_{9}$ $M_{2,3}$ दुष्प्रापं (for °पां). $K_{4}$ राजन्नवाप दुष्प्राप- (sic). — $^{d}$) $B_{1,4}$ $D_{1,3,8,9}$ $M_{4,5}$ गतिमग्र्यां; Dn $D_{2,7}$ गतिमन्यां (for सिद्धिमग्र्यां). $K_{1-3}$ $B_{6}$ $D_{3,5}$ $T_{1,4}$ $G_{3,4}$ अवाप्स्यसि (for गमिष्यसि). $B_{2,5}$ गतिमग्र्यां गमिष्यति.

16 $^{a}$) $B_{4}$ नर- (for राज-). $K_{1,2}$ $B_{6}$ $D_{4-6,8}$ S त्वं चापि राजेंद्र तथा. — $^{b}$) $T_{1}$ स्त्रिया (for श्रिया). — $^{c}$) $T_{1}$ गांधार्या (for °री-). $K_{1}$ गच्छ; $K_{2}$ याता (for गन्ता). — $^{d}$) $G_{5}$ $M_{2}$ अंते (for तेषां).

17 $^{a}$) $K_{3}$ नित्यं स; $K_{5}$ $D_{1}$ नित्यं ते; $B_{1,2,4,5}$ Dn $D_{2,3,7,9}$ $T_{1}$ ते नित्यं (for नित्यं च). — $^{b}$) $K_{1,2}$ वृत्रहर्तुः; $B_{6}$ बलिहंतुः (sic) (for बलहन्तुः). $K_{4}$ B ($B_{3}$ missing) Dn $D_{1-3,7}$ $M_{4,5}$ समीपगः; $T_{2}$ समाहितः (for

त्वां सदैव महीपाल स त्वां श्रेयसि योक्ष्यति ॥ १७
तव शुश्रूषया चैव गान्धार्याश्च यशस्विनी ।
भर्तुः सलोकतां कुन्ती गमिष्यति वधूस्तव ॥ १८
युधिष्ठिरस्य जननी स हि धर्मः सनातनः ।
वयमेतत्प्रपश्यामो नृपते दिव्यचक्षुषा ॥ १९
प्रवेक्ष्यति महात्मानं विदुरश्च युधिष्ठिरम् ।
संजयस्त्वदनुध्यानात्पूतः स्वर्गमवाप्स्यति ॥ २०
एतच्छ्रुत्वा कौरवेन्द्रो महात्मा
सहैव पत्न्या प्रीतिमान्प्रत्यगृह्णात् ।
विद्वान्वाक्यं नारदस्य प्रशस्य
चक्रे पूजां चातुलां नारदाय ॥ २१
तथा सर्वे नारदं विप्रसंघाः
संपूजयामासुरतीव राजन् ।
राज्ञः प्रीत्या धृतराष्ट्रस्य ते वै
पुनः पुनः समहृष्टास्तदानीम् ॥ २२

इति श्रीमहाभारते आश्रमवासपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

समीपतः). — [c]) K5 त्वा स देवो (for त्वां सदैव). K3 महीपाळ; K4 B1.2.4.5 Dn D1-3.7.9 महाराज; B6 T2 G1.3.4 M1 महीपालः (for °पाल). — [d]) K1 T2 G2 M3-5 त्वा (for त्वां). K1 S (except G3.4) योक्ष्यते; K3 योस्स्यति; D6 योक्ष्यसे (for °ति). K4 B1.2.4.5 Dn D1-3.7.9 श्रेयसा स च योक्ष्यति (B5 °ते); D4.6.8 स त्वां श्रेयोसि (D4 °योस्सि) योषिते (sic).

18 [b]) D1 M1 गांधारी (for °र्याश्च). K1.2 तपस्विनी; T1.3 यशास्विनि (sic) (for °स्विनी). — [c]) B1.2.4.5 Dn D1-3.7.9 एषा (for कुन्ती). — [d]) D5 तदा (for तव).

19 [c]) K3.5 D4.6.8 T2 G1.2 M1 एवं; K4 T1 एव; G5 M2-4 एनं (for एतत्). — [d]) K2 -चक्षुषः (for °षा).

20 [a]) T2.3 G5 M1-4 स्वमात्मानं (for महा°). D4.6.8 G1 प्रवेशय(G1 °ये)त्स्वमात्मानं. — [b]) K2 विदुरस्य; D4-6.8 S विदुरस्तु (for °श्च). K5 T2 युधिष्ठिर. — [c]) K2.5 B (B3 missing) Dn D2.7.9 T2 तद् (for त्वद्). — [d]) B (B3 missing) Dn2 D1-3.7.9 M4 इतः; T2 G1.2 पूत-; T3 G5 M1.3 सूतः (for पूतः). K3-5 T1 गमिष्यति (for अवाप्स्यति). Dn1 इतः स्वर्ग्यमाप्स्यति (sic); D5 T4 G3.4 M5 सूतः स्वर्गं गमिष्यति.

21 Before 21, MSS. ins. वैशंपायन उवाच. —
K4.5 स तत् (for एतत्). — [b]) B (B3 missi
Dn D1-3.7.9 सार्धं (for सहैव). K1 प्रतिग्रहात् (s
K2 प्रातिगृह्णत् (sic); B (B3 missing) Dn2 I
7.9 संबभूव; Dn1 संबभूव ह (for प्रत्यगृह्णात्). —
K1.2 स तद्; T1 नृपो (for विद्वान्). K5 वाक्ये (
वाक्यं). D4.6 G2 शोभनं नारदस्य; D8 नारदं श
नस्य (for नारदस्य प्रशस्य). K1 निशम्य; Dn1
प्रशंस्य; T3 प्रविश्य (sic) (for प्रशस्य). — [d])
तस्य राजा; K4 नारदस्य (for °दाय). K1.2 पूजां
नारदे चातुलां वै.

22 [a]) B (except B6; B3 missing) Dn D2.3
ततः; D5 T2.3 G3.4 M4 तदा (for तथा). — [c])
6.8 G1.2 प्रीता (for प्रीत्या). D4.6.8 G2 चैव;
सोवै (sic); T1 तस्य (for ते वै). — [d]) K1.2.4
हृष्यंस् (for °ष्टास्).

Colophon om. in B4-6 Dn D2.7. — *Adhy. na*
K1.2.4 नारदवाक्यं. — *Adhy. no.* (figures, word.
both): K2 B2 22; K4 D4.6.8 T2 G1.2.5 M1-4
D1 21; D5 T3.4 G3.4 M5 26 (as in text);
24. — *Śloka no.*: K4 37; K5 53; D9 17.

# २७

वैशंपायन उवाच ।

नारदस्य तु तद्वाक्यं प्रशशंसुर्द्विजोत्तमाः ।
शतयूपस्तु राजर्षिर्नारदं वाक्यमब्रवीत् ॥ १
अहो भगवता श्रद्धा कुरुराजस्य वर्धिता ।
सर्वस्य च जनस्यास्य मम चैव महाद्युते ॥ २
अस्ति काचिद्विवक्षा तु मम तां गदतः शृणु ।
धृतराष्ट्रं प्रति नृपं देवर्षे लोकपूजित ॥ ३
सर्ववृत्तान्ततत्त्वज्ञो भवान्दिव्येन चक्षुषा ।
युक्तः पश्यसि देवर्षे गतीर्वै विविधा नृणाम् ॥ ४
उक्तवान्नृपतीनां त्वं महेन्द्रस्य सलोकताम् ।
न त्वस्य नृपतेर्लोकाः कथितास्ते महामुने ॥ ५
स्थानमस्य क्षितिपतेः श्रोतुमिच्छाम्यहं विभो ।
त्वत्तः कीदृक्कदा वेति तन्ममाचक्ष्व पृच्छतः ॥ ६
इत्युक्तो नारदस्तेन वाक्यं सर्वमनोनुगम् ।
व्याजहार सतां मध्ये दिव्यदर्शी महातपाः ॥ ७
यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिम् ।

## 27

☞ This adhy. is missing in Ś1 B3 (cf. v. l. 15. 3. 3; 22. 1).

1 $^{a}$) B2. 4 M2 च (for तु). — $^{b}$) B (B3 missing) Dn D1–3. 7. 9 शशंसुर्द्विजसत्तमाः. — K5 om. (hapl.) 1$^{d}$–8$^{c}$. — $^{d}$) M4. 5 इदं वचनमब्रवीत्.

2 K5 om. 2 (cf. v. l. 1). — $^{a}$) B6 ततो (for अहो). T1 G3. 4 भगवति (T1 °तः) (for °वता). B5 D9 श्रुत्वा; D5 T1. 4 प्रीतिः; T2. 3 G1. 2. 5 M1–4 राज्ञः (for श्रद्धा). D4. 6. 8 G2 अतो हि भवता राज्ञः. — $^{b}$) K3. 4 B6 D1. 3 M5 -राज्ञो वि- (for -राजस्य). D4. 6. 8 T2. 3 G1. 2. 5 M1–4 प्रीतिरस्य विवर्धि(G1 °र्ध)ता; D5 T4 G3. 4 तव (D5 श्रद्धा; T4 अस्य) राज्ञो विवर्धिता. — $^{d}$) D1 समं (for मम). K4 महामते; M3 °मुने (for °द्युते).

3 K5 om. 3 (cf. v. l. 1). — $^{b}$) B (B3 missing) Dn D1–3. 7. 9 तां मे (B6 तन्मे) नि- (for मम तां). — $^{d}$) K4 महर्षे (for देवर्षे). M3 प्रति- (for लोक-). K1 D1 -पूजितं; B2. 6 D1. 8 T4 G5 -पूजितः (for °त). K3 महर्षे लोकपूजिते; B5 T3 देवार्षिलोकपूजितं (T3 °ते); D9 देवर्षिर्लोकपूजितः; T1 °र्षिगणपूजित.

4 K5 om. 4 (cf. v. l. 1). — $^{a}$) B2 सर्वे; D4–6. 8 T1. 2. 4 G1. 2. 5 M1–4 लोक- (for सर्व-). B4 -सर्वज्ञो; G3 -तत्त्वज्ञ (for °ज्ञो). — $^{b}$) G3. 4 भव्ये (for भवान्). — $^{c}$) G3. 4 युक्तं (for युक्तः). B6 D1. 4. 6. 8 T2. 3 G2 M1 पश्यति (for °सि). Dn D2. 7 विप्रर्षे (for देवर्षे). K1. 2 युक्तः पश्यति देवर्षिर्; B1. 5 M2 युक्तः पश्यति विप्रर्षे. — $^{d}$) G3 damaged. K3 D5. 8 T2. 4 G1. 2. 5 M गतयो; K4 गतिं वा; B1. 4–6 Dn2 D1–4. 6. 7 गतिर्या; B2 D9 गतिर्वा; Dn1 गतीर्या; T1 गतिश्च; T3 damaged (for गतीर्वै). T1. 3 विविधां. G4 तेषां स्थानानि सत्तम.

5 K5 om. 5 (cf. v. l. 1). — $^{a}$) K1–4 D5 T1. 4 G3. 4 M5 नृपतीनेतान्; D4. 6. 8 G1. 2 °तींद्रांस्त्वं; T2. 3 G5 M1–4 °तीशांस्त्वं (for °तीनां त्वं). B2. 6 D1. 3. 9 तु (for त्वं). — $^{b}$) K2 B2. 6 D1. 3. 9 T1 M5 त्वं म( B6 तन्म )हेंद्र-; K3 प्राप्तानिंद्र- (for महेन्द्रस्य). D5 T4 सलोकगान् (for °ताम्). K1. 4 G3. 4 त्वं महेंद्रसलोकगान्; D4. 6. 8 महेंद्रसमयोगतान्; T2. 3 G1. 2. 5 M1–4 महेंद्रसमलोकगा( T3 °वा )न्. — $^{c}$) G3. 4 सर्वस्य (for न त्वस्य). K1 लोके; D6 लोकं (for लोकाः). — $^{d}$) T1 वै (for ते). G1 महात्मने (for °मुने).

6 K5 om. 6 (cf. v. l. 1). — $^{a}$) B (B3 missing) Dn D1–3. 7. 9 स्थानमप्यस्य नृपतेः. — $^{b}$) D4. 6. 8 T2 G2 M5 प्रभो; T3 G3. 4 मुने (for विभो). — $^{c}$) K3 क च (for कदा). K2. 3 B1. 2. 5. 6 Dn D1–4. 6–8 चेति; T3 वेत्ति (for वेति). K4 त्वत्तः कीदृक्कदाचितु. — $^{d}$) K4 मया (for मम). K (K5 om.) B2. 6 D1. 3. 9 सुव्रत (for पृच्छतः). B1. 4. 5 Dn D2 तन्ममाख्याहि तत्त्वतः.

7 K5 om. 7 (cf. v. l. 1). — $^{b}$) K1 D1 -मनोगतं (for °नुगम्). — $^{c}$) K1. 2 तदा; B2. 4 Dn D1–3. 7. 9 सभा- (for सतां). K1. 2 तेषां (for मध्ये). — $^{d}$) T1 दिव्यज्ञानो (for °दर्शी). K1. 2 स नारदः (for महातपाः).

8 K5 om. 8$^{abc}$ (cf. v. l. 1). Before 8, MSS.

दृष्टवानस्मि राजर्षे तत्र पाण्डुं नराधिपम् ॥ ८
तत्रेयं धृतराष्ट्रस्य कथा समभवन्नृप ।
तपसो दुश्चरस्यास्य यदयं तप्यते नृपः ॥ ९
तत्राहमिदमश्रौषं शक्रस्य वदतो नृप ।
वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः ॥ १०
ततः कुबेरभवनं गान्धारीसहितो नृपः ।
विहर्ता धृतराष्ट्रोऽयं राजराजाभिपूजितः ॥ ११
कामगेन विमानेन दिव्याभरणभूषितः ।
ऋषिपुत्रो महाभागस्तपसा दग्धकिल्बिषः ॥ १२
संचरिष्यति लोकांश्च देवगन्धर्वरक्षसाम् ।
स्वच्छन्देनेति धर्मात्मा यन्मां त्वं परिपृच्छसि ॥ १३
देवगुह्यमिदं प्रीत्या मया वः कथितं महत् ।
भवन्तो हि श्रुतधनास्तपसा दग्धकिल्बिषाः ॥ १४
इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः ।
सर्वे सुमनसः प्रीता बभूवुः स च पार्थिवः ॥ १५
एवं कथाभिरन्वास्य धृतराष्ट्रं मनीषिणः ।
विप्रजग्मुर्यथाकामं ते सिद्धगतिमास्थिताः ॥ १६

इति श्रीमहाभारते आश्रमवासपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

---

ins. नारद उवाच. —$^{a}$) $T_1$ शक्रपदं; $T_2$ $G_1$ °समो (for °सदो). —$^{b}$) $K_4$ दृष्ट्वा (for गत्वा). $T_1$ शक्रं च परिदृष्टवान्. —$^{c}$) $D_8$ $T_{2,3}$ $G_{1,2}$ राजेंद्र; $G_{3,4}$ विप्रर्षे (for राजर्षे). $T_1$ राजर्षीनपरांश्चापि. —$^{d}$) $K_{4,5}$ पांडु- (for पाण्डुं). $D_{4-6,8}$ $T_{2-4}$ $G_{2-4}$ $M_{1,2}$ नृपं तदा ($D_5$ $T_4$ °था) (for नराधिपम्). $T_1$ $G_5$ $M_{3-5}$ तत्र पांडुनृपं तदा ($T_1$ $M_5$ °था); $G_1$ तत्र पांडुपदं तदा. — After 8, $K_{3,4}$ ins.:

47* माद्र्या सह महात्मानमिन्द्रार्धासनसंस्थितम् ।
युधिष्ठिरादिसत्पुत्रकृतपुण्योपबृंहितम् ।

[ (L. 1) $K_4$ इंद्रार्धासनमागतं (for the post. half). ]

9 $^{a}$) $B_{2,6}$ $D_9$ $G_2$ [ए]व; $D_8$ $G_1$ [ए]वं (for [इ]यं). —$^{b}$) $G_1$ om. (hapl.) from कथा up to दुश्चरस्यास्य (in 9$^{c}$). $K_5$ कथाः. — $K_5$ om. (hapl.) 9$^{c}$–11$^{b}$. —$^{c}$) $K_1$ $T_3$ दुश्चरश्च; $B_{1,2,4,5}$ Dn $D_{2,3,5,7}$ दुष्करस्य; $D_6$ दुस्तरस्य (for दुश्चरस्य). $D_{4,6,8}$ तपसो दुश्चराजस्य (sic). —$^{d}$) $G_3$ यदायं. $G_1$ Bom. ed. तपते (for तप्यते). $K_{2,4}$ $D_9$ नृप; $B_{1,2,4,5}$ $Dn_2$ $D_{1,2,4,6-8}$ $T_2$ $G_2$ $M_1$ तपः (for नृपः).

10 $K_5$ om. 10 (cf. v. l. 9). —$^{a}$) $D_{4,6,8}$ $T_{2,3}$ $G_{1,2,5}$ $M_{1-4}$ transp. अहं and इदम्. —$^{b}$) $K_4$ सदने; $T_3$ गदतो (for व°). $B_{1,2,4-6}$ Dn $D_{1-3,7,9}$ स्वयं; $D_{4,6,8}$ $G_1$ नृपः (sic) (for नृप). $K_{1-3}$ $D_5$ $T_4$ $G_{3,4}$ शक्रस्य गदतो दिवि ($K_2$ भुवि; $K_3$ मम); $T_1$ °स्य सदने दिवि. —$^{c}$) $T_3$ [अ]त्रीणि (for त्रीणि). $B_6$ त्रीणि वर्षाणि शिष्टानि. —$^{d}$) $K_4$ राज्ञश्च. $K_2$ परमम् (for ऽस्य परम्). $D_{4,6,8}$ आयुषा.

11 $K_5$ om. 11$^{ab}$ (cf. v. l. 9). —$^{a}$) $K_{1,2,4}$ $D_{4,6,8}$ $T_3$ $G_3$ -भवने; $D_5$ $T_{1,4}$ $G_{3,4}$ $M_2$ -सदने ($M_2$ °नं) (for -भवनं). —$^{b}$) $K_{1,3}$ गांधार्या (for °री-). $K_4$ $T_2$ नृप (for नृपः). —$^{c}$) $K_2$ विहितो; B ($B_3$ missing) Dn $D_{1-3,7,9}$ प्रयाता. —$^{d}$) $D_5$ $T_{1,4}$ $G_{3,4}$ -राजेन (for -राजाभि-). B ($B_3$ missing) Dn $D_{1-3,7,9}$ -सत्कृतः (for -पूजितः).

12 $T_1$ om. 12$^{cd}$. —$^{c}$) $K_3$ महाभाग.

13 $B_6$ om. (hapl.) 13–14. —$^{a}$) $K_2$ $D_{4,6,8}$ $T_3$ $G_{1,2,5}$ $M_{1-4}$ विचरिष्यति लोकांश्च. —$^{c}$) $D_{4,6,8}$ अति-; $T_3$ एव (for इति). $B_4$ धर्माय (for धर्मात्मा). —$^{d}$) $K_4$ $T_1$ मा. $K_4$ $B_{1,2,4,5}$ Dn $D_{1-3,7,9}$ अनु- (for परि-). $D_{4,6,8}$ $T_2$ $G_{1,2}$ $M_{1,3-5}$ व्यासस्य तु तपोबलात्; $G_5$ $M_2$ व्यासस्य तपसो बलात्.

14 $B_6$ om. 14 (cf. v. l. 13). —$^{a}$) $K_4$ -गुह्यतमं; $K_5$ -गुह्यमिदं; $T_1$ -गुह्यमिति (for °मिदं). —$^{b}$) $K_4$ च (for वः).

15 Before 15, MSS. ins. वैशंपायन उवाच. —$^{a}$) $M_3$ [उ]क्ते (for ते). $K_4$ Dn $D_{2,7}$ तस्य वचः (for ते तस्य तत्). $K_{3,5}$ संश्रुत्य (for तच्छ्रुत्वा). —$^{c}$) $K_5$ $D_5$ $M_{2,3}$ प्रीत्या (for प्रीता). —$^{d}$) $K_5$ बभूव. $B_4$ ह; $M_3$ हि (for च). $K_5$ $D_9$ पार्थिव.

16 $^{a}$) $K_1$ $T_1$ $G_5$ $M_{2,5}$ आश्वास्य (for अन्वास्य). —$^{b}$) $K_4$ $D_{5,8}$ S (except $G_5$ $M_2$) मनीषिणं (for °षिणः). —$^{c}$) $K_{3-5}$ $B_6$ $D_5$ $T_{2,3}$ $G_{1-4}$ विप्रा जग्मुर् (for विप्रजग्मुर्). $D_8$ यथाकालं (for °कामं). —$^{d}$)

11

# २८

वैशंपायन उवाच ।
वनं गते कौरवेन्द्रे दुःखशोकसमाहताः ।
बभूवुः पाण्डवा राजन्मातृशोकेन चार्दिताः ॥ १
तथा पौरजनः सर्वः शोचन्नास्ते जनाधिपम् ।
कुर्वाणाश्च कथास्तत्र ब्राह्मणा नृपतिं प्रति ॥ २
कथं नु राजा वृद्धः स वने वसति निर्जने ।
गान्धारी च महाभागा सा च कुन्ती पृथा कथम् ॥ ३
सुखार्हः स हि राजर्षिर्न सुखं तन्महावनम् ।
किमवस्थः समासाद्य प्रज्ञाचक्षुर्हतात्मजः ॥ ४
सुदुष्करं कृतवती कुन्ती पुत्रानपश्यती ।
राज्यश्रियं परित्यज्य वनवासमरोचयत् ॥ ५
विदुरः किमवस्थश्च भ्रातुः शुश्रूषुरात्मवान् ।
स च गावल्गणिर्धीमान्भर्तृपिण्डानुपालकः ॥ ६
आकुमारं च पौरास्ते चिन्ताशोकसमाहताः ।
तत्र तत्र कथाश्चक्रुः समासाद्य परस्परम् ॥ ७
पाण्डवाश्चैव ते सर्वे भृशं शोकपरायणाः ।

---

K1 B5 T4 G2-4 सिद्धिगतिम्; K4 सिद्धा गतिम्; M1 सिद्धाश्रमम् ( for सिद्धगतिम् ). K2, 5 B6 आश्रिताः ( for आस्थिताः ).

Colophon. —*Adhy. name :* K1, 2 शतयूपप्रश्नः; M3 देवगुप्तकथनं. —*Adhy. no.* ( figures, words or both ): K2 23; K5 D4, 6, 8 T2 G1, 2, 5 M1-4 26; Dn2 D7 20; D1 22; D5 T3, 4 G3, 4 M5 27 ( as in text ); T1 25. —*Śloka no. :* K4 54; K5 69; D9 14.

## 28

☞ This adhy. is missing in Ś1 B3 ( cf. v. l. 15. 3. 3; 22. 1 ).

1 ᵃ) K1, 2 D6 T2 G2, 5 M1-4 एवं- ( for वनं ). —ᵇ) K4, 5 Dn2 -समाहिताः; B4 -समास्थिताः; B5 -महाहताः; Dn1 D2, 5, 7 -समन्विताः; D6, 8 T4 G3 -समागताः ( for °हताः ). —ᵈ) Dn2 D1, 2, 8 T1 चान्विताः ( for चार्दिताः ).

2 ᵃ) G3, 4 तदा ( for तथा ). D6 T4 दार- ( for पौर- ). K2-5 D4, 6, 8 T2 G M1-4 -जनाः सर्वे ( for -जनः सर्वः ). —ᵇ) K3-5 शोचंतस्ते ( for शोचन्नास्ते ). B6 धनाधिपं; D5, 9 T1, 3, 4 नरा° ( for जना° ). D4, 6, 8 G1, 2 शोचंतः सततं नृपं; T2 G5 M1-3 शोचंतस्तं नराधिपं; G3, 4 शोचन्नास्तन्नराधिपं ( G3 °प ). —ᶜ) B6 कुर्वाणस्तु. — For 2ᶜᵈ, D4, 6, 8 T2 G1, 2, 5 M1-4 subst. :

48* तत्र तत्र कथा ह्यासन्द्विजानां कौरवान्प्रति ।

[ M4 कौरवं ( for °वान् ). ]

3 ᵃ) B6 Dn D2, 7 तु; D5 T1, 4 स ( for नु ). D4-6, 8, 9 T1, 2, 4 G1-5 M1, 2, 4, 5 सन्; T3 च ( for स ). —ᵈ) T1 तथा ( for कथम् ). B2 विदुरश्च महाद्युतिः.

4 ᵃ) K B5 D4-6, 8 T1-3 G2, 5 M1-3, 5 स च; D1, 9 च स ( for स हि ). —ᵇ) K3, 5 T3 असुखं; D4-6, 8 T2, 4 G M असुखी ( for न सुखं ). B ( B3 missing ) Dn D1-3, 7, 9 असुखी तद्वनं महत्; T1 कथं स्याद्दुःखितो वने. —ᶜ) K3, 4 D2 T2 M4 किमवस्थां ( T2 M4 °स्थं ) ( for °स्थः ). —ᵈ) K5 प्रज्ञाचक्षुर् ( sic ) ( for °चक्षुर् ). B2 महात्मजः; D4-6, 8 S महामनाः ( for हतात्मजः ).

5 ᵇ) D4, 6, 8 T2 G1, 2, 5 M अपास्य सा ( M1 वै ) ( for अपश्यती ). —ᶜ) K1, 2 B1, 4, 5 Dn D1-3, 7, 9 T1 राज-; G5 M3, 4 राज्यं ( for राज्य- ). D4, 6, 8 T2, 3 G1, 2, 5 M1-4 च संत्यज्य ( for परि° ). —ᵈ) K3, 5 वने वासम् ( for वनवासम् ). G3 M2 अकारयत् ( for अरोच° ). B ( B3 missing ) Dn1 D2, 3, 9 वनं सा सम( B4 समव )रोचयत्.

6 ᵃ) K1 corrupt. G4 स ( for च ). —ᵇ) K4, 5 D4, 6 T1, 2 G1 M1-3 भ्रातृ- ( for भ्रातुः ). K1 G3 शुश्रूषम् ( for शुश्रूषुर् ). B2 आप्तवान्; D6, 8 आर्तिवान् ( for आत्म° ). —ᶜ) M3 वा ( for च ). D5, 6 T1 G3, 4 M5 श्रीमान् ( for धी° ). K1, 2 अथ गावल्गनिर्धीमान्; B2 स च गावलगनिः श्रीमान्. —ᵈ) G3 भर्तुः ( for भर्तृ- ). K5 -लोमकः ( for -पालकः ).

7 K5 om. 7. —ᵃ) D5 S ( except G2 ) आकुमारात् ( for °रं ). —ᵇ) K1-4 D1-6, 8 S -परायणाः; B5

शोचन्तो मातरं वृद्धामूषुर्नातिचिरं पुरे ॥ ८
तथैव पितरं वृद्धं हतपुत्रं जनेश्वरम् ।
गान्धारीं च महाभागां विदुरं च महामतिम् ॥ ९
नैषां बभूव संप्रीतिस्तान्विचिन्तयतां तदा ।
न राज्ये न च नारीषु न वेदाध्ययने तथा ॥ १०
परं निर्वेदमगमंश्चिन्तयन्तो नराधिपम् ।
तच्च ज्ञातिवधं घोरं संस्मरन्तः पुनः पुनः ॥ ११
अभिमन्योश्च बालस्य विनाशं रणमूर्धनि ।
कर्णस्य च महाबाहोः संग्रामेष्वपलायिनः ॥ १२
तथैव द्रौपदेयानामन्येषां सुहृदामपि ।
वधं संस्मृत्य ते वीरा नातिप्रमनसोऽभवन् ॥ १३
हतप्रवीरां पृथिवीं हतरत्नां च भारत ।
सदैव चिन्तयन्तस्ते न निद्रामुपलेभिरे ॥ १४
द्रौपदी हतपुत्रा च सुभद्रा चैव भामिनी ।
नातिप्रीतियुते देव्यौ तदास्तामप्रहृष्टवत् ॥
वैराट्यास्तु सुतं दृष्ट्वा पितरं ते परिक्षितम् ।
धारयन्ति स्म ते प्राणांस्तव पूर्वपितामहाः ।

इति श्रीमहाभारते आश्रमवासपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

---

-समाहिताः ( for °हताः ). — K3 om. ( hapl. ) $7^{c}$–$8^{b}$. — $^{c}$ ) D6, 8 T2 कथां.

8 K3 om. $8^{ab}$ ( cf. v. l. 7 ). — $^{a}$ ) K1, 2, 5 D6 T1 G3–5 M त्वपि ; K4 त्वथ ; D4, 6, 8 T2, 3 G1, 2 श्रपि ( for चैव ). K6 transp. ते and सर्वे. — $^{c}$ ) D4, 6, 8 स्मरंतो ( for शोचन्तो ). — $^{d}$ ) K3 ऊहुर् ; D9 ऊचुर् ( for ऊषुर् ). G2 परे ( for पुरे ).

9 $^{a}$ ) B1, 4–6 Dn D1, 2, 7 वृद्धं पितरं ( by transp. ). — $^{b}$ ) K4 जनाधिपं ; D5 T4 G3, 4 नरेश्वरं ( for जने° ). — $^{d}$ ) K3, 4 महाकविं ; D5 T1 G3, 4 °द्युतिं ( for °मतिम् ).

10 $^{a}$ ) K D4–6, 8 S तेषां ( K नैषां ; G1 तेषु ) भोगेष्वभूत्प्रीतिर्. — $^{b}$ ) K3–5 तद्वि- ; D1 स्थाने ; D4–6, 8 S न तांश् ( for तान्वि- ). B6 तथा ; T3 सदा ( for तदा ). — $^{c}$ ) K2 D8 राज्येषु ; K4 भोगे च ( for नारीषु ). T3 न च राज्ये न नारीषु. — $^{d}$ ) T3, 4 G3, 4 तदा ( for तथा ). K1, 2 B1, 4, 5 Dn D2, 8 न वेदाध्ययनेषु च.

11 $^{a}$ ) K2 परि- ( for परं ). — $^{b}$ ) K5 पुनः पुनः ( for नराधिपम् ). — K5 transp. $11^{cd}$ and $12^{ab}$. — $^{c}$ ) D6, 8 G2 वीरं ; G1 वैरं ( for घोरं ). — $^{d}$ ) K3, 6 चिंतयंतः ( for संस्मरन्तः ). K1, 2, 5 परस्परं ( for पुनः पुनः ).

12 K2 om. $12^{a}$–$13^{b}$. K5 transp. $11^{cd}$ and $12^{ab}$. — $^{c}$ ) K1, 3, 5 D1, 3–6, 8, 9 T4 G3, 5 M3–5 महाबाहो ( for °बाहोः ). K4 कर्णं चैव महात्मानं.

13 K2 om. $13^{ab}$ ( cf. v. l. 12 ). — $^{b}$ ) K1 सर्वेषां ; T3 अशेष- ( for अन्येषां ). — $^{d}$ ) D6 T4 G3, 4 M1 न प्रीतमनसोभवन्.

14 $^{a}$ ) B6 हुत- ( for हत- ). — $^{b}$ ) K3, 5 B2 Dn D2 हृत- ( for हत- ). B5 -पुत्रां ( for -रत्नां ). K4 हतोत्सवां ( for च भारत ). — $^{c}$ ) K4 इत्येवं ; D1 T2 G1 सदैवं ( for °व ). — $^{d}$ ) K3, 5 M4 -पेदिरे ( for -लेभिरे ). B ( B3 missing ) Dn D2, 3, 7, 9 न शर्म चोपलेभिरे ; D1 शर्म नोपालभंत वै.

15 $^{b}$ ) K2 B ( B3 missing ) Dn D6 भाविनी ( for भामिनी ). — $^{c}$ ) K4 -प्रमुदिते ; B6 -प्रीतियुतौ ; D7 °युजे ( for °युते ). K5 देव्या ( for देव्यौ ). — $^{d}$ ) K3, 5 वसताम् ( for तदास्ताम् ).

16 $^{a}$ ) K2 वैराज्यास् ( for °ट्यास् ). B ( B3 missing ) Dn D1–3, 7 तनयं ( for तु सुतं ). D1 गत्वा ( for दृष्ट्वा ). G5 M2 तं वैराट्याः सुतं दृष्ट्वा. — $^{b}$ ) B1, 2, 5 D T4 G M परीक्षितं. — $^{c}$ ) B2, 4 तु ( for ते ). K4 सर्वेषां चैव ते प्राणांस्. — After 16, K3 ins.:

49* ते शोकवेगाभिहता विचेतसो
दिने दिने तैः पुरवासिभिः सह ।
विहाय भोगान्परराष्ट्रमर्दनाः
प्रत्यक्तकामास्त्ववतस्थुराहताः ।

Colophon om. in K1. — *Adhy. name :* K2 पांडवशोकः. — *Adhy. no.* ( figures, words or both ):

# २८

578 21. 1 23. 1 वैशंपायन उवाच ।
वनं गते कौरवेन्द्रे दुःखशोकसमाहताः ।
बभूवुः पाण्डवा राजन्मातृशोकेन चार्दिताः ॥ १
तथा पौरजनः सर्वः शोचन्नास्ते जनाधिपम् ।
कुर्वाणाश्च कथास्तत्र ब्राह्मणा नृपतिं प्रति ॥ २
कथं नु राजा वृद्धः स वने वसति निर्जने ।
गान्धारी च महाभागा सा च कुन्ती पृथा कथम् ॥ ३
सुखार्हः स हि राजर्षिर्न सुखं तन्महावनम् ।
किमवस्थः समासाद्य प्रज्ञाचक्षुर्हतात्मजः ॥ ४
सुदुष्करं कृतवती कुन्ती पुत्रानपश्यती ।
राज्यश्रियं परित्यज्य वनवासमरोचयत् ॥ ५
विदुरः किमवस्थश्च भ्रातुः शुश्रूषुरात्मवान् ।
स च गावल्गणिर्धीमान्भर्तृपिण्डानुपालकः ॥ ६
आकुमारं च पौरास्ते चिन्ताशोकसमाहताः ।
तत्र तत्र कथाश्चक्रुः समासाद्य परस्परम् ॥ ७
पाण्डवाश्चैव ते सर्वे भृशं शोकपरायणाः ।

---

K1 B5 T4 G2–4 सिद्धिगतिम्; K4 सिद्धा गतिम्; M1 सिद्धाश्रमम् (for सिद्धगतिम्). K2, 5 B6 आश्रिताः (for आस्थिताः).

Colophon. — *Adhy. name:* K1, 2 शतयूपप्रश्नः; M3 देवगुप्तकथनं. — *Adhy. no.* (figures, words or both): K2 23; K5 D4, 6, 8 T2 G1, 2, 5 M1–4 26; Dn2 D7 20; D1 22; D5 T3, 4 G3, 4 M5 27 (as in text); T1 25. — *Śloka no.:* K4 54; K5 69; D9 14.

## 28

☞ This adhy. is missing in Ś1 B3 (cf. v. l. 15. 3. 3; 22. 1).

1 a) K1, 2 D6 T2 G2, 5 M1–4 एवं- (for वनं). — b) K4, 5 Dn2 -समाहिताः; B4 -समास्थिताः; B5 -महाहताः; Dn1 D2, 5, 7 -समन्विताः; D6, 8 T4 G3 -समागताः (for °हताः). — d) Dn2 D1, 2, 8 T1 चान्विताः (for चार्दिताः).

2 a) G3, 4 तदा (for तथा). D6 T4 दार- (for पौर-). K2–5 D4, 6, 8 T2 G M1–4 -जनाः सर्वे (for -जनः सर्वः). — b) K3–5 शोचंतस्ते (for शोचन्नास्ते). B6 धनाधिपं; D5, 9 T1, 3, 4 नरा° (for जना°). D4, 6, 8 G1, 2 शोचंतः सततं नृपं; T2 G5 M1–3 शोचंतस्तं नराधिपं; G3, 4 शोचन्नासन्नराधिपं (G3 °प). — c) B6 कुर्वाणस्तु. — For 2cd, D4, 6, 8 T2 G1, 2, 5 M1–4 subst.:

48* तत्र तत्र कथा ह्यासन्द्विजानां कौरवान्प्रति ।

[ M4 कौरवं (for °वान्). ]

3 a) B6 Dn D2, 7 तु; D5 T1, 4 स (for नु) D4–6, 8, 9 T1, 2, 4 G1–5 M1, 2, 4, 5 सन्; T3 च (for स) — d) T1 तथा (for कथम्). B2 विदुरश्च महाद्युतिः.

4 a) K B5 D4–6, 8 T1–3 G2, 5 M1–3, 5 स च D1, 9 च स (for स हि). — b) K3, 5 T3 असुखं D4–6, 8 T2, 4 G M असुखी (for न सुखं). B (B3 missing) Dn D1–3, 7, 9 असुखी तद्वनं महत्; T1 कष्ट स्याद्दुःखितो वने. — c) K3, 4 D2 T2 M4 किमवस्थां (T2 M4 °स्थं) (for °स्थः). — d) K5 प्रज्ञाचख्युर् (sic) (for °चक्षुर्). B2 महात्मजः; D4–6, 8 S महामनाः (for हतात्मजः).

5 b) D4, 6, 8 T2 G1, 2, 5 M अपास्य सा (M1 वै) (for अपश्यती). — c) K1, 2 B1, 4, 5 Dn D1–3, 7, 9 T1 राज-; G5 M2, 4 राज्यं (for राज्य-). D4, 6, 8 T2, 3 G1, 2, 5 M1–4 च संत्यज्य (for परि°). — d) K3, 5 वने वासम् (for वनवासम्). G3 M2 अकारयत् (for अरोच°). B (B3 missing) Dn1 D2, 3, 9 वनं सा सम (B4 समव) रोचयत्.

6 a) K1 corrupt. G4 स (for च). — b) K4, 5 D4, 6 T1, 2 G1 M1–3 भ्रातृ- (for भ्रातुः). K1 G3 शुश्रूषम् (for शुश्रूषुर्). B2 आप्तवान्; D5, 8 आर्तिवान् (for आत्म°). — c) M3 वा (for च). D5, 6 T4 G3, 4 M5 श्रीमान् (for धी°). K1, 2 अथ गावल्गणिर्धीमान्; B3 स च गावल्गनिः श्रीमान्. — d) G3 भर्तुः (for भर्तृ-). K5 -लोमकः (for -पालकः).

7 K5 om. 7. — a) D5 S (except G2) आकुमाराश् (for °रं). — b) K1–4 D1–6, 8 S -परायणाः; B6

शोचन्तो मातरं वृद्धामूषुर्नातिचिरं पुरे ॥ ८
तथैव पितरं वृद्धं हतपुत्रं जनेश्वरम् ।
गान्धारीं च महाभागां विदुरं च महामतिम् ॥ ९
नैषां बभूव संप्रीतिस्तान्विचिन्तयतां तदा ।
न राज्ये न च नारीषु न वेदाध्ययने तथा ॥ १०
परं निर्वेदमगमंश्चिन्तयन्तो नराधिपम् ।
तच्च ज्ञातिवधं घोरं संस्मरन्तः पुनः पुनः ॥ ११
अभिमन्योश्च बालस्य विनाशं रणमूर्धनि ।
कर्णस्य च महाबाहोः संग्रामेष्वपलायिनः ॥ १२
तथैव द्रौपदेयानामन्येषां सुहृदामपि ।
वधं संस्मृत्य ते वीरा नातिप्रमनसोऽभवन् ॥ १३
हतप्रवीरां पृथिवीं हतरत्नां च भारत ।
सदैव चिन्तयन्तस्ते न निद्रामुपलेभिरे ॥ १४
द्रौपदी हतपुत्रा च सुभद्रा चैव भामिनी ।
नातिप्रीतियुते देव्यौ तदास्तामप्रहृष्टवत् ॥ १५
वैराट्यास्तु सुतं दृष्ट्वा पितरं ते परिक्षितम् ।
धारयन्ति स्म ते प्राणांस्तत्र पूर्वपितामहाः ॥ १६

इति श्रीमहाभारते आश्रमवासपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

---

-समाहिताः ( for °हताः ). — K3 om. ( hapl. ) 7ᶜ–8ᵇ. — ᶜ ) D6. 8 T2 कथां.

8 K3 om. 8ᵃᵇ ( cf. v. l. 7 ). — ᵃ ) K1. 2. 5 D5 T1 G3–5 M त्वपि ; K4 त्वथ ; D4. 6. 8 T2. 3 G1. 2 अपि ( for चैव ). K5 transp. ते and सर्वे. — ᶜ ) D4. 6. 8 स्मरंतो ( for शोचन्तो ). — ᵈ ) K3 ऊहुर् ; D9 ऊधुर् ( for ऊषुर् ). G2 परे ( for पुरे ).

9 ᵃ ) B1. 4–6 Dn D1. 2. 7 वृद्धं पितरं ( by transp. ). — ᵇ ) K4 जनाधिपं ; D5 T4 G3. 4 नरेश्वरं ( for जने° ). — ᵈ ) K3. 4 महाकविं ; D5 T1 G3. 4 °द्युतिं ( for °मतिम् ).

10 ᵃ ) K D4–6. 8 S तेषां ( K नैषां ; G1 तेषु ) भोगेष्वभूत्प्रीतिर्. — ᵇ ) K3–5 तद्वि- ; D1 स्थानं ; D4–6. 8 S न तांश् ( for तान्वि- ). B5 तथा ; T3 सदा ( for तदा ). — ᶜ ) K2 D8 राज्येषु ; K4 भोगे च ( for नारीषु ). T3 न च राज्ये न नारीषु. — ᵈ ) T3. 4 G3. 4 तदा ( for तथा ). K1. 2 B1. 4. 5 Dn D2. 6 न वेदाध्ययनेषु च.

11 ᵃ ) K2 परि- ( for परं ). — ᵇ ) K5 पुनः पुनः ( for नराधिपम् ). — K5 transp. 11ᶜᵈ and 12ᵃᵇ. — ᶜ ) D6. 8 G2 वीरं ; G1 वैरं ( for घोरं ). — ᵈ ) K3. 5 चिंतयंतः ( for संस्मरन्तः ). K1. 2. 5 परस्परं ( for पुनः ).

12 K2 om. 12ᵃ–13ᵇ. K5 transp. 11ᶜᵈ and 12ᵃᵇ. — ᶜ ) K1. 3. 5 D1. 3–6. 8. 9 T4 G3. 5 M3–5 महाबाहो ( for °बाहोः ). K4 कर्णं चैव महात्मानं.

13 K2 om. 13ᵃᵇ ( cf. v. l. 12 ). — ᵇ ) K1 सं T3 अशेष- ( for अन्येषां ). — ᵈ ) D5 T4 G3. 4 M प्रीतमनसोभवन्.

14 ᵃ ) B6 हुत- ( for हत- ). — ᵇ ) K3. 5 B2 D1 हृत- ( for हत- ). B5 -पुत्रां ( for -रत्नां ). K4 हतो ( for च भारत ). — ᶜ ) K4 इत्येवं ; D1 T2 G1 ( for °व ). — ᵈ ) K3. 5 M4 -पेदिरे ( for -लेभिरे ). B ( B3 missing ) Dn D2. 3. 7. 9 न शर्म चोपलेभिरे ; D1 शर्म नोपालभंत वै.

15 ᵇ ) K2 B ( B3 missing ) Dn D9 भाविनी ( for भामिनी ). — ᶜ ) K4 -प्रमुदिते ; B6 -प्रीतियुतौ ; D1 °युजे ( for °युते ). K5 देव्या ( for देव्यौ ). — ᵈ ) K3. 5 वसताम् ( for तदास्ताम् ).

16 ᵃ ) K2 वैराज्यास् ( for °ट्यास् ). B ( B3 missing ) Dn D1–3. 7 तनयं ( for तु सुतं ). D1 गत्वा ( for दृष्ट्वा ). G5 M2 तं वैराट्याः सुतं दृष्ट्वा. — ᵇ ) B1. 2. 5 D T4 G M परीक्षितं. — ᶜ ) B2. 4 तु ( for ते ). K4 सर्वेषां चैव ते प्राणांस्. — After 16, K3 ins. :

49* ते शोकवेगाभिहता विचेतसो
दिने दिने तैः पुरवासिभिः सह ।
विहाय भोगान्परराष्ट्रमर्दनाः
प्रत्यक्तकामास्त्ववतस्थुरादृताः ।

Colophon om. in K1. — *Adhy. name* : K2 पांडवशोकः. — *Adhy. no.* ( figures, words or both ) :

# २९

वैशंपायन उवाच ।
एवं ते पुरुषव्याघ्राः पाण्डवा मातृनन्दनाः ।
स्मरन्तो मातरं वीरा बभूवुर्भृशदुःखिताः ॥ १
ये राजकार्येषु पुरा व्यासक्ता नित्यशोऽभवन् ।
ते राजकार्याणि तदा नाकार्षुः सर्वतः पुरे ॥ २
आविष्टा इव शोकेन नाभ्यनन्दन्त किंचन ।
संभाष्यमाणा अपि ते न किंचित्प्रत्यपूजयन् ॥ ३
ते स्म वीरा दुराधर्षा गाम्भीर्ये सागरोपमाः ।
शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन् ॥ ४
अनुस्मरन्तो जननीं ततस्ते कुरुनन्दनाः ।
कथं नु वृद्धमिथुनं वहत्यद्य पृथा कृशा ॥ ५
कथं च स महीपालो हतपुत्रो निराश्रयः ।
पत्न्या सह वसत्येको वने श्वापदसेविते ॥ ६
सा च देवी महाभागा गान्धारी हतबान्धवा ।
पतिमन्धं कथं वृद्धमन्वेति विजने वने ॥ ७
एवं तेषां कथयतामौत्सुक्यमभवत्तदा ।
गमने चाभवद्बुद्धिर्धृतराष्ट्रदिदृक्षया ॥ ८
सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत् ।
अहो मे भवतो दृष्टं हृदयं गमनं प्रति ॥ ९
न हि त्वा गौरवेणाहमशकं वक्तुमात्मना ।

---

K4 D4. 6. 8 T2 G1. 2. 5 M1–4 27 ; B6 25 ; D5 T3. 4 G3. 4 28 ( as in text ) ; D7 21 ; T1 M5 26. — *Śloka no.* : K4 70 ; K5 85 ; D9 17.

29

☞ This adhy. is missing in Ś1 B3 ( cf. v. l. 15 3. 3 ; 22. 1 ).

1 K1 D1. 6 om. the ref. — b ) D5 T1. 3. 4 G3. 4 पांडवा भरतर्षभ. — c ) M3 चैव ( for वीरा ).

2 a ) K2 ते ( for ये ). K1 T4 G4 राज्य- ( for राज- ). K1. 2 रता ; B4 नरा ( for पुरा ). — b ) K1. 2 न सज्जंत कचिन्नृप ; K3–5 न प्रमाद्यंत वै कचित् ; D4. 6. 8 G1. 2. 5 नामाद्यंत पुरे नृप ( D4. 6 तदा ; G1 नृपः ) ; D5 T M नामाद्यंत ( T2. 3 M1. 2. 4 °तः ) कचिन्नृप ; G3. 4 नामाद्यंत क्वाचित्क्वाचित्. — c ) T4 G3. 4 राज्य- ( for राज- ). K3–5 पुनर् ( for तदा ). — d ) M5 नाकार्षं ( for °र्षुः ). K1 D8 G5 M मासशः ( G5 °गः ) ; K4 सर्वशः ; D4–6 T1. 2. 4 मनसा ; T3 G2 अवशाः ; G1 मानसः ; G3. 4 वासवी ( sic ) ( for सर्वतः ). K2 नामन्सा ***णो पुरे ; K3. 5 नाकार्षुर्मातृशोकतः.

3 a ) B6 Dn D1. 2. 7 प्रविष्टा ( for आ° ). T1 एव ( for इव ). — b ) K1 नाभ्यनंदति. K4 किं च नः ; B4. 5 D1–6. 8 B5 D1. 9 कंचन ; D3 केचन ( for किं° ). B4. 5 D1–6. 8 S नाभ्यनं( B4 °वं )दन्कथंचन. — c ) K1. 2 संभाषमाणा. G3. 4 ते सर्वे ( for अपि ते ). K4 सुभाष्यमाणा अपि च. — d ) D6 G1. 2 कथंचित् ; D8 कथं च ( for न किंचित् ).

4 a ) G1 तेषु ( for ते स्म ). — c ) K4 शोकापहतविज्ञाना. — d ) K4 नष्टं ( for नष्ट- ).

5 a ) T1 सदा ( for अनु- ). K4 संस्मरंतोथ जननीं ; B ( B3 missing ) Dn D1–3. 7. 9 अचिंतयंश्च ज°. — b ) K4 कुल- ; B1. 4–6 Dn D1. 2. 7 पांडु- ( for कुरु- ). — G1 D1 om. 5c–7d. — c ) K4 वृद्धं च ; B2 हि वृद्धं ; T1 तु ( T1 च ) वृद्ध- ( for नु वृद्ध- ). — d ) T1 वसति ; T3 दहति ; G2 M1 वहंति ; G3 भवति ( for वहति ). D5 T1. 4 G3. 4 क्व सा पृथा ; M5 कृशा पृथा ( by transp. ). K4 वहतेद्य पृथा कृशा ; B ( B3 missing ) Dn D1–3. 7. 9 वहत्यतिकृशा पृथा.

6 G1 om. 6 ( cf. v. l. 5 ). — a ) K1. 2 न ( for च ). — c ) K1. 2 एष ( for एको ). B6 D1 तत्रायं वसते राजा. — d ) K2 च्वापद- ( sic ). B2 -शोभिते ( for -सेविते ).

7 G1 om. 7 ( cf. v. l. 5 ).

8 a ) D8 एषां ( for तेषां ). — b ) B4 तथा ( for तदा ). — c ) G3 ( also as in text ) प्रीतिर् ( for बुद्धिर् ). — d ) D4. 6. 8 धृतराष्ट्रं ( for °ष्ट्र- ).

9 b ) M5 प्रतिपत्य ( sic ) ( for प्रणि° ). — c ) D4. 6. 8 T2. 3 G1. 2 नु ( for मे ). K1. 4 D5 T2. 3 G1. 3–5 M2. 4. 5

गमनं प्रति राजेन्द्र तदिदं समुपस्थितम् ॥ १०
दिष्ट्या द्रक्ष्यामि तां कुन्तीं वर्तयन्तीं तपस्विनीम् ।
जटिलां तापसीं वृद्धां कुशकाशपरिक्षताम् ॥ ११
प्रासादहर्म्यसंवृद्धामत्यन्तसुखभागिनीम् ।
कदा नु जननीं श्रान्तां द्रक्ष्यामि भृशदुःखिताम् ॥ १२
अनित्याः खलु मर्त्यानां गतयो भरतर्षभ ।
कुन्ती राजसुता यत्र वसत्यसुखिनी वने ॥ १३
सहदेववचः श्रुत्वा द्रौपदी योषितां वरा ।
उवाच देवी राजानमभिपूज्याभिनन्द्य च ॥ १४
कदा द्रक्ष्यामि तां देवीं यदि जीवति सा पृथा ।
जीवन्त्या ह्यद्य नः प्रीतिर्भविष्यति नराधिप ॥ १५
एषा तेऽस्तु मतिर्नित्यं धर्मे ते रमतां मनः ।
योऽद्य त्वमस्मान्राजेन्द्र श्रेयसा योजयिष्यसि ॥ १६
अग्रपादस्थितं चेमं विद्धि राजन्वधूजनम् ।
काङ्क्षन्तं दर्शनं कुन्त्या गान्धार्याः श्वशुरस्य च ॥ १७
इत्युक्तः स नृपो देव्या पाञ्चाल्या भरतर्षभ ।
सेनाध्यक्षान्समानाय्य सर्वानिदमथाब्रवीत् ॥ १८
निर्यातयत मे सेनां प्रभूतरथकुञ्जराम् ।

---

भवता ( $K_4$ $M_{4.5}$ °तां ) ( for °तो ). $K_2$ अहो भगवतां द्रष्टुं; $K_3$ अहो मे वदतां द्रष्टुं.

10 $^{a}$) $D_9$ [अ]हं ( for हि ). $K_{2-4}$ B ( $B_3$ missing ) Dn $D_{1-3.5.7.9}$ $T_4$ $G_{3.4}$ त्वां ( for त्वा ). $K_{1.2}$ गौरवेन. — $^{b}$) $K_3$ अशक्तं; $K_5$ $D_5$ °क्यं ( for °कं ). $B_{1.4.5}$ Dn $D_{2.7}$ अंजसा; $D_{4.6.8}$ T $G_{1-4}$ $M_{1.3-5}$ आत्मनः ( for °ना ). — $^{d}$) $B_6$ तदिदं समुपाश्रितं; $D_{4.6.8}$ $T_{2.3}$ $G_{1.2}$ °दं प्रत्युपस्थितं; $G_{3.4}$ तदा वासमुप( $G_4$ °मव )स्थितं.

11 $^{a}$) $K_1$ दृष्ट्वा ( for दिष्ट्या ). — $^{b}$) $K_{1.2}$ $D_5$ $T_1$ वर्धयंतीं; $B_2$ सरसं°; $D_{4.6.8}$ $T_{2.3}$ $G_{1.2.5}$ $M_{1-4}$ वर्तमानां ( $D_{4.6.8}$ °न- ) ( for °यन्तीं ). $K_{2.3}$ मनस्विनीं ( for तप° ). $K_5$ वर्तयंती तपस्विनी. — $^{c}$) $K_{1.2}$ मलिनां; $D_9$ जटिलीं ( for °लां ). — $T_4$ om. ( hapl. ) $11^{d}$–$12^{a}$. — $^{d}$) $D_1$ स्वर्गकाम- ( for कुशकाश- ). $K_5$ $B_2$ $D_9$ $T_{1.3}$ $G_3$ -परिक्षितां; $B_{4.5}$ -परीक्षतां; $G_{1.2}$ -परीक्षितां ( for -परिक्षताम् ).

12 $T_4$ om. $12^{a}$ (cf. v. l. 11). $K_5$ om. $12^{ab}$. — $^{a}$) $B_5$ -सुख- ( for -हर्म्य- ). $K_{1.2}$ हर्म्यप्रासादसंवृद्धाम्. — $^{b}$) $B_6$ -भागिनं; $D_3$ $T_4$ -भामिनीं ( for -भागिनीम् ). — $^{c}$) $D_{4.6.8}$ तदा ( for कदा ). $K_{2.3}$ Dn तु; $D_5$ सु- ( for नु ). $K_4$ कदा नु जननी श्रांता; $K_5$ दिष्ट्या द्रष्टास्मि तां कुंतीं ( cf. $11^{a}$ ). — $^{d}$) $K_{1.4}$ द्रक्षामि ( sic ); $D_{4.6.8}$ $G_2$ वक्ष्यामि ( for द्र° ).

13 With $13^{a}$, cf. 1. 94. $57^{c}$. — $^{a}$) $D_5$ $T_{1.4}$ $G_{2-5}$ $M_2$ किल ( for खलु ). — $^{c}$) $K_{1.2}$ $B_{1.2.5.6}$ $D_{2-4.8.9}$ कुंति- ( for कुन्ती ). $M_3$ चात्र ( for यत्र ). — $^{d}$) $K_{1.2}$ $B_{1.2.4.5}$ Dn $D_{2.3.7}$ असुखिता ( for °नी ). $T_1$ $G_{3.4}$ संवसत्यसुखी ( $T_1$ °खे ) वने.

14 $^{d}$) $D_{3.5}$ $T_{1.4}$ $G_3$ अभिवाद्य; $G_4$ °पूज्य ( for °नन्द्य ). $K_{1.2}$ अभिनंद्याभिपूज्य च.

15 $^{a}$) $D_{4.6.8}$ $T_{2.3}$ $G_{1.2.5}$ $M_{1-4}$ द्रक्ष्यामि तां कदा देवीं. — $^{b}$) $G_4$ वा ( for सा ). — $^{c}$) $K_4$ $T_3$ जीवंत्यां; $T_{1.2}$ $G_5$ $M_{1-3.5}$ जीवत्या ( for जीवन्त्या ). $K_{1.2}$ हृदये; $K_{3-5}$ हृदि नः; Dn $D_{1-3.7.9}$ ह्यद्य ते ( for ह्यद्य नः ). — $^{d}$) B ( $B_3$ missing ) Dn $D_{1-3.5.7.9}$ $T_{1.4}$ जनाधिप ( for नरा° ).

16 $^{b}$) $K_4$ धारयतां; $G_1$ ते रक्ष्यतां ( for ते रमतां ). $G_{3.4}$ वर ( for मनः ). — $^{c}$) $D_5$ $T_4$ $G_{3.4}$ योज्यस्; $T_2$ सोद्य; $T_3$ अद्य ( for योऽद्य ). — $^{d}$) $B_5$ $D_{6.8.9}$ योजयिष्यति.

17 $^{a}$) $K_3$ अउय; $B_2$ अग्रे ( for अग्र- ). $K_{1.2}$ -पारस्थितं ( $K_2$ °ते ) ( for -पाद° ). $B_6$ -स्थिता चैनं; $D_1$ -स्थितं ह्येनं; $D_3$ -स्थितं राजन्; $D_{4-6.8}$ $T_3$ $G_{1.5}$ $M_{1-4}$ -स्थितमिमं ( $M_1$ °दं ); $T_2$ -स्थितजनं; $G_2$ -स्थितिमिमं ( for -स्थितं चेमं ). $K_4$ अग्रतः प्रस्थितं विद्धि. ❀ Cn: अग्रपादस्थितं, प्रयाणार्थं पुरस्कृतेनैव पादेन स्थितम् । अत्यन्तमुत्सुकमित्यर्थः । ❀ — $^{b}$) $K_4$ राजंश्चेमं; $D_3$ विद्धि चेम ( for विद्धि राजन् ). — $^{c}$) $D_5$ T $G_{3-5}$ $M_{1-3.5}$ कांक्षितं; $G_2$ कांक्षंति ( for काङ्क्षन्तं ). — $^{d}$) $K_3$ श्वसुरस्य ( sic ).

18 $^{a}$) $K_{1.2}$ सहितो ( for स नृपो ). — $^{b}$) $K_1$ पंचाल्या; B ( $B_3$ missing ) Dn $D_{1-3.7.9}$ द्रौपद्या ( for पाञ्चाल्या ). $K_{2.4}$ $G_4$ $M_{2.5}$ भरतर्षभः. — $^{c}$) $B_2$ सेनापत्यान् ( for °ध्यक्षान् ). $K_2$ समासाद्य; $K_{3-5}$ $T_1$ °नीय ( for °नाय्य ). — $^{d}$) $K_{3-5}$ तानिदम् ( for इदमथ ). B ( $B_3$ missing ) Dn $D_{1-3.7.9}$ उवाच ह ( for अथाब्रवीत् ).

19 $^{a}$) $K_{1.2}$ पर्यापयत; $K_{4.5}$ $D_{4-6.8}$ $T_{2-4}$ $G_{1-4}$

द्रक्ष्यामि वनसंस्थं च धृतराष्ट्रं महीपतीम् ॥ १९
रुयध्यक्षांश्चाब्रवीद्राजा यानानि विविधानि मे ।
सज्जीक्रियन्तां सर्वाणि शिबिकाश्च सहस्रशः ॥ २०
शकटापणवेशाश्च कोशशिल्पिन एव च ।
निर्यान्तु कोशपालाश्च कुरुक्षेत्राश्रमं प्रति ॥ २१
यश्च पौरजनः कश्चिद्द्रष्टुमिच्छति पार्थिवम् ।
अनावृतः सुविहितः स च यातु सुरक्षितः ॥ २२
सूदाः पौरोगवाश्चैव सर्वं चैव महानसम् ।
विविधं भक्ष्यभोज्यं च शकटैरुह्यतां मम ॥ २३
प्रयाणं घुष्यतां चैव श्वोभूत इति मा चिरम् ।
क्रियन्तां पथि चाप्यद्य वेश्मानि विविधानि च ॥ २४
एवमाज्ञाप्य राजा स भ्रातृभिः सह पाण्डवः ।
श्वोभूते निर्ययौ राजा सस्त्रीबालपुरस्कृतः ॥ २५
स बहिर्दिवसानेवं जनौघं परिपालयन् ।
न्यवसन्नृपतिः पञ्च ततोऽगच्छद्वनं प्रति ॥ २६

इति श्रीमहाभारते आश्रमवासपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

$M_{2.3}$ निर्यापय( $G_3$ °यि )त ; $B_6$ $D_3$ °तयंतु ( for °तयत ). $D_{4.6.8}$ $T_{2.3}$ $G_{1.2.5}$ $M_{1-4}$ transp. मे and सेनां. — $K_1$ om. 19$^{cd}$. — $^c$) $K_2$ -संस्थं तं ; $K_{3-5}$ -वासस्थं ( for -संस्थं च ). $D_{4-6.8}$ T G $M_{1-3.5}$ द्रक्ष्यामो वनवासस्थं. — $^d$) $M_5$ धृतराष्ट्रमनीषिणं.

20 $^a$) $K_{3-5}$ $D_{4-6.8}$ T G $M_2$ अध्यक्षांश्च ( for रुयध्यक्षांश्च ). — $^b$) $D_{4.6.8}$ याना मे ( sic ) ( for यानानि ). $K_{3-5}$ $B_{2.4.6}$ $D_5$ $T_{1.2.4}$ $G_{3.4}$ च ( for मे ). — $^c$) $K_5$ $D_9$ -क्रियतां. $K_1$ कर्माणि ; $D_{4.6.8}$ सहस्राणि ( for सर्वाणि ).

21 $^a$) K $G_{3-5}$ $M_{1-3}$ शकटापणवेश्या( $K_1$ °शां )श्च ; $B_{2.5}$ Dn $D_{1.2.7}$ °पणवेशा( Dn $D_2$ °शां )श्च ; $D_{4.5}$ $T_3$ °पणवेष( $T_3$ °षा )श्च ; $D_8$ $G_1$ शकुनापणवेष( $G_1$ °शा )श्च. — $^b$) $K_3$ तथा ; $K_{4.5}$ $Dn_2$ $D_{1.4.6-8}$ $T_1$ $G_4$ $M_5$ कोशः ; $B_{1.4-6}$ $Dn_1$ $D_{2.3.9}$ कोषः ; $D_5$ $G_2$ कोशाः ; $T_4$ तेन ( for कोश- ). $K_{1.2}$ यानयुग्यं तथैव च. — $^c$) $B_6$ निर्याण- ( for °न्तु ). $B_{2.4-6}$ Dn $D_{1.2}$ कोष- ( for कोश- ). — $^d$) $T_1$ -राजाश्रमं ( for -क्षेत्रा° ).

22 $^c$) $D_{4-6}$ अनावृत्तः ; $G_{3.4}$ °द्दतः ( for °वृतः ). $K_{3.5}$ स वै यातु ; $K_4$ सुविहितं ; $B_1$ $D_{4.6.8}$ $G_2$ तु सहितः ; $B_{2.6}$ सुवहितः ; $B_4$ $Dn_1$ $D_9$ स्ववहितः ; $D_3$ सुविदितः ( for °हितः ). — $^d$) $K_{3.5}$ सौख्येनैव ; $K_4$ स चायातु ( for स च यातु ). $D_{4.6.8}$ $G_{1.2}$ सुशिक्षितः ( for सुर° ).

23 $^a$) $K_1$ $B_4$ सूदः ; $D_1$ शूद्राः ; $M_2$ सूताः ( for सूदाः ). ❀ Cv : पौरोगवाः, दध्नः अध्यक्षाः । पौरोगव( स्तु ? )स्तदध्यक्षः सूपकारस्तु वल्लव इत्यमरः ( 2. 9. 27 ) । ❀ — $^b$) $D_3$ सर्वाश्च ; $T_{2.3}$ सर्वेश्च ( for सर्वं ). $G_{3.4}$ महावनं ( for °नसम् ). $T_{2.3}$ सर्वश्चैव महानसः. — $^c$) $K_1$ भक्ष- ; $K_4$ चैव ( for भक्ष्य- ). — $^d$) $T_2$ $G_{2.3}$ $M_3$ ऊह्यतां. $T_1$ शकटैराहरंतु मे.

24 $^a$) $T_4$ युज्यतां ( for घुष्यतां ). $D_{4.6.8}$ $G_{1.2}$ चात्र ; $T_{1.4}$ $G_{3.4}$ चापि ; $T_{2.3}$ $G_5$ $M_{1-4}$ चाद्य ; $M_5$ अद्य ( for चैव ). $K_{1.2}$ प्रयाणं घोष्यतां चापि. — $^b$) $K_5$ $T_1$ श्वोभूतम्. $D_{4.6.8}$ $G_4$ इव ; $T_1$ इह ( for इति ). $K_5$ मां ( for मा ). $K_4$ श्वोभ्युदिते च मा चिरं. — $^c$) K $B_{2.4.6}$ $D_{1.9}$ T $G_{1.3-5}$ $M_{2.5}$ क्रियतां ( sic ). $K_4$ चाप्यश्च ( sic ) ; $D_{4.6.8}$ $T_{2.3}$ $G_1$ $M_{1.2.4.5}$ चाप्यत्र ( for °द्य ). — $^d$) $T_3$ यानानि ( for वेश्मानि ). $D_5$ $T_{1.4}$ $G_{3.4}$ वेश्मानि सदृशानि नः ( $G_4$ च ).

25 $^a$) $K_{3.5}$ स तदा ; $M_2$ राजासौ ( for राजा स ). — $^b$) $K_5$ $K_4$ एतानाज्ञापयामास ; $T_2$ एवमेव तु राजेंद्र. — $^c$) $B_{1.2.5.6}$ Dn $D_{1-3.7.8}$ राजन् ( for $T_2$ पांडव. — $^c$) $B_{1.2.5.6}$ Dn $D_{1-3.7.8}$ राजन् ( for राजा ). — $^d$) $K_2$ $D_{4.6.8}$ $T_4$ -राज- ; $K_3$ -बाल- ; $B_{1.2.6}$ $D_{1.9}$ -वृद्ध- ( for -बाल- ). $B_1$ ( marg. as in text ) -पुरःसरः. $B_{4.5}$ Dn $D_{2.3.7}$ सस्त्रीवृद्धपुरःसरः.

26 $^a$) $M_1$ बहु- ( for बहिर् ). K $T_1$ $G_{3.4}$ $M_5$ दिवसान्येवं ( $G_{3.4}$ °व ); Dn $D_8$ $G_2$ $M_2$ °सानेव ; $T_3$ °सैनेदं ( for °सानेवं ). — $^b$) $K_{4.5}$ $T_{1.4}$ $G_{3.4}$ $M_5$ प्रति( $K_5$ °त्य )पालयन् ; $T_2$ पर्य° ( for परि° ). — $^c$) $K_5$ एवं स ( for न्यवसन् ). $G_5$ $M_2$ युधिष्ठिरश्च नृपतिस्. — $^d$) $K_2$ गच्छन् ; $D_9$ गच्छेद् ( for अगच्छद् ).

Colophon. — *Adhy. name :* $K_1$ प्रयाणघोषणं. — *Adhy. no.* ( figures, words or both ): $K_2$ 26 ; $K_{4.5}$ $D_{4.6.8}$ $T_2$ $G_{1.2.5}$ $M_{1-4}$ 28 ; $Dn_2$ $D_7$ 22 ; $D_1$ 24 ; $D_5$ $T_{3.4}$ $G_{3.4}$ $M_5$ 29 ( as in text ); $T_1$ 27. — *Śloka no. :* $K_1$ 27 ; $D_9$ 25.

# ३०

वैशंपायन उवाच ।

आज्ञापयामास ततः सेनां भरतसत्तमः ।
अर्जुनप्रमुखैर्गुप्तां लोकपालोपमैर्नरैः ॥ १
योगो योग इति प्रीत्या ततः शब्दो महानभूत् ।
क्रोशतां सादिनां तत्र युज्यतां युज्यतामिति ॥ २
केचिद्यानैर्नरा जग्मुः केचिदश्वैर्मनोजवैः ।
रथैश्च नगराकारैः प्रदीप्तज्वलनोपमैः ॥ ३
गजेन्द्रैश्च तथैवान्ये केचिदुष्ट्रैर्नराधिप ।
पदातिनस्तथैवान्ये नखरप्रासयोधिनः ॥ ४
पौरजानपदाश्चैव यानैर्बहुविधैस्तथा ।
अन्वयुः कुरुराजानं धृतराष्ट्रदिदृक्षया ॥ ५
स चापि राजवचनादाचार्यो गौतमः कृपः ।
सेनामादाय सेनानी प्रययावाश्रमं प्रति ॥ ६
ततो द्विजैर्वृतः श्रीमान्कुरुराजो युधिष्ठिरः ।
संस्तूयमानो बहुभिः सूतमागधबन्दिभिः ॥ ७
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
रथानीकेन महता निर्ययौ कुरुनन्दनः ॥ ८
गजैश्चाचलसंकाशैर्भीमकर्मा वृकोदरः ।

## 30

☞ This adhy. is missing in $Ś_{1}$ $B_{3}$ ( cf. v. l. 15. 3. 3 ; 22. 1 ).

1 $^{a}$) $D_{5}$ $T_{1.4}$ $G_{3.4}$ $M_{5}$ तदा ( for ततः ). $D_{4.6.8}$ $T_{2.3}$ $G_{1.2.5}$ $M_{1-4}$ तत ( $D_{4.6.8}$ °त्र ) आज्ञापयामास. — $^{b}$) $K_{3}$ सैन्यं ( for सेनां ). $K_{1.3}$ $B_{5}$ $D_{6}$ $T_{1}$ $G_{1-4}$ $M_{5}$ -सत्तम ( for °मः ). — $^{c}$) $D_{9}$ अर्जुनः ( for °न- ). $K_{3}$ गुप्तं ( for गुप्तां ). — $T_{1}$ om. $1^{d}$–$2^{a}$. — $^{d}$) $D_{9}$ नृपैः ( for नरैः ). $G_{1}$ लोकपालः क्रमैर्नरैः ; $G_{3.4}$ मृत्युकालोपमैर्नरैः.

2 = var. 5. 170. 15. $T_{1}$ om. $2^{a}$ ( cf. v. l. 1 ). $M_{2}$ om. $2^{a}$–$3^{b}$. — $^{a}$) $K_{2}$ योगे ( for योगो ). $K_{1.2}$ प्रीतस् ; $K_{3}$ प्रीतैस् ( for प्रीत्या ). — $^{b}$) $K_{3}$ तथा ( for ततः ). — $^{c}$) $K_{1}$ क्रोशितां ; $D_{4.6.8}$ कोशातां ( sic ) ( for क्रोशतां ). $B_{6}$ सादिनस्. — $^{d}$) $Dn_{2}$ युज्यतामिति भारत.

3 $M_{2}$ om. $3^{ab}$ ( cf. v. l. 2 ). — $^{a}$) $K_{3.5}$ $D_{4-6.8}$ $T_{1.2.4}$ $G_{2-4}$ $M_{1.3.5}$ जना जग्मुः ; $T_{3}$ विना जग्मुः ; $G_{1}$ महानागैः ( for नरा जग्मुः ). — $^{b}$) $K_{4.5}$ $B_{2.6}$ $Dn$ $D_{1-3.7}$ $G_{5}$ महाजवैः ( for मनो° ). — $^{c}$) $K_{1.2}$ रथैश्च विविधैः केचित् ; B ( $B_{3}$ missing ) Dn $D_{1-3.7.9}$ कांचनैश्च रथैः केचिज्. — $^{d}$) B ( $B_{3}$ missing ) Dn $D_{2.3.7}$ ज्वलित- ( for प्रदीप्त- ). $D_{1}$ ज्वलितार्कानलोपमैः.

4 $^{a}$) $K_{3.5}$ $D_{5}$ $T_{1.4}$ $G_{3.4}$ चान्ये ; $K_{4}$ यानैर् ; $T_{3}$ केचित् ( for [ए]वान्ये ). $K_{1.2}$ मातंगेंद्रैस्तथा चान्ये ; $D_{4.6.8}$ $T_{2}$ $G_{1.2.5}$ $M_{1-3}$ गजेंद्रैर्गर्जितैः केचित्. — $^{b}$) $K_{4}$ महोष्ट्रैरेव चापरे. — $^{c}$) K $B_{2.4-6}$ $D_{1.3.9}$ पदातय ( for °तिनस् ). $D_{4.6.8}$ $T_{2.3}$ $G_{1.2.5}$ $M_{1-4}$ पदातयः पुरुषा ; $D_{5}$ $T_{1.4}$ $G_{3.4}$ $M_{5}$ °तयस्तथा चान्ये. — $^{d}$) K नखेन ; $K_{2}$ नवीन- ; $T_{1}$ खरैश्च ( for नखर- ). $K_{5}$ -प्राद ( for -प्रास- ). $G_{4}$ -पाणयः ( for -योधिनः ). ❀ Cn नखरप्रासः, व्याघ्रनखवत्पराचीनफलकुक्षिः । ❀

5 $T_{3}$ om. $5^{ab}$. — $^{a}$) $T_{1}$ -जानपदैश् ( for °पदाश् ). — $^{b}$) $K_{1-3}$ $D_{4.6.8.9}$ $G_{1.2}$ तदा ( for तथा ). K यानैरुच्चावचैस्तदा. — $^{d}$) $B_{2}$ $Dn_{2}$ -दिदृक्षवः ( for °क्षया ). $K_{1-3.5}$ $B_{1.4.6}$ $Dn_{1}$ $D_{1-3.7.9}$ धृतराष्ट्रं दिदृक्षवः.

6 $^{a}$) $D_{5}$ $T_{4}$ -सदनाद् ( for -वचनाद् ). — $^{c}$) I आश्रित्य ; $G_{3.4}$ आनीय ( for आदाय ). — $^{d}$) $K_{3}$, चाश्रमं ( for आ° ). $T_{3}$ प्रययौ तं महीपतिं.

7 $^{a}$) $G_{4}$ transp. द्विजैर् and वृतः. $K_{1.2}$ विप्रै ( for द्विजैर् ). $K_{3}$ युतः श्रीमान् ; $K_{4}$ अनुगतो ; ( $B_{3}$ missing ) Dn $D_{1-3.7.9}$ परिवृतः ; $D_{8}$ वृतश्चेमा ( for वृतः श्रीमान् ). — $^{b}$) $K_{4}$ धर्मराजो ( for कुरु° ). — $^{c}$) $K_{1}$ संस्तूयमाणो. $D_{6.8}$ $T_{2}$ $G_{1.2}$ मुनिभिः ( fo बहुभिः ). — $^{d}$) $K_{1.5}$ $Dn_{2}$ $T_{3}$ $G_{2-4}$ -वंदिभिः.

8 $^{a}$) B ( $B_{3}$ missing ) $D_{4-6.8}$ $T_{1.2.4}$ $G_{1}$ M पां रेण. — $^{b}$) $K_{3}$ $D_{8}$ ध्रीयमाणेन. — $^{c}$) $G_{3.4}$ ततोनीके ( for रथा° ). — $^{d}$) $K_{2}$ -पुंगवः ; $K_{5}$ $D_{4.6.8}$ -नंदन $D_{5}$ $T_{1.4}$ -वर्धनः ( for -नन्दनः ). B ( $B_{3}$ missing ) D $D_{1-3.7.9}$ निर्जगाम कुरूद्वहः.

9 $^{a}$) $G_{3}$ चातुल- ( for चाचल- ). $K_{4}$ गत्वा स आश्र चैव. — $^{b}$) $K_{4}$ सर्व- ( for भीम- ). $K_{4.5}$ $D_{4-6.8}$ ( except $M_{1}$ ) महाभुजः ( for वृकोदरः ). — $^{c}$) $K_{1}$

न हि जानामि सर्वेषां दुष्कृतं पुण्यकर्मणाम् ॥ ४४
किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः ।
तथा श्रिया युतः पापः सह सर्वैः पदानुगैः ॥ ४५
महेन्द्र इव लक्ष्मीवानास्ते परमपूजितः ।
कस्येदानीं विकारोऽयं यदिमे नरकं गताः ॥ ४६
सर्वधर्मविदः शूराः सत्यागमपरायणाः ।
क्षात्रधर्मपराः प्राज्ञा यज्वानो भूरिदक्षिणाः ॥ ४७
किं नु सुप्तोऽस्मि जागर्मि चेतयानो न चेतये ।
अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ॥ ४८
एवं बहुविधं राजा विममर्श युधिष्ठिरः ।
दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः ॥ ४९
क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः ।
देवांश्च गर्हयामास धर्मं चैव युधिष्ठिरः ॥ ५०
स तीव्रगन्धसंतप्तो देवदूतमुवाच ह ।
गम्यतां भद्र येषां त्वं दूतस्तेषामुपान्तिकम् ॥ ५१
न ह्यहं तत्र यास्यामि स्थितोऽस्मीति निवेद्यताम् ।
मत्संश्रयादिमे दूत सुखिनो भ्रातरो हि मे ॥ ५२
इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमता ।

---

$M_3$ पाप- (for पुण्य-). $K_4$ $B_2$ $D_9$ $G_5$ -कर्मिणां; $D_6$ -कर्मणा (for °णाम्). $K_{1.2}$ दुष्कृतं ($K_2$ °ष्टानां) पापकर्मिणां.

45 $^a$) $D_4$ विकृतं; $T_3$ किं कृतं (for किं कृत्वा). — $^c$) $D_{3.6}$ अथ; $T_3$ तदा (for तथा). $G_3$ प्रिया- (for श्रिया). $K_3$ $D_{5.6.9}$ $T_{1.2.4}$ G M वृतः; $K_5$ पुनः (for युतः). $K_{4.5}$ $D_1$ (*inf. lin.* as in text) प्राप्तः; Dn $D_{2-4}$ $T_3$ पापैः (for पापः). — $^d$) $K_5$ सर्वे (for सर्वैः). $D_5$ $G_3$ $M_5$ सहानुजैः; $D_9$ तदानुगैः; $G_5$ $M_{2-4}$ सहानुगैः (for पदा°). $K_3$ $D_8$ $T_{1.2.4}$ $G_{1.2.4}$ $M_1$ इह ($K_3$ $T_1$ स हि) सर्वैः सहानुगैः ($T_4$ $G_2$ °जैः).

46 $^a$) $D_6$ $T_{2.4}$ $G_{1.2.4.5}$ $M_{1-4}$ महेंद्रवच्च (for °द्र इव). — $^d$) $K_3$ $B_{1.3.5.6}$ Dn $D_{1-4.7}$ $T_{2.3}$ य इमे; $D_6$ इति मे; $D_9$ यदीमे (for यदिमे). $K_3$ $D_{8.9}$ निरयं; $K_{4.5}$ नरके (for °कं).

47 $^a$) $K_{1.4.5}$ $B_6$ $T_{1-3}$ G $M_{2-4}$ सर्वे; $K_2$ मम (for सर्व-). $K_3$ $D_{8.9}$ सर्वे धर्मपराः शूराः. — $^b$) $K_{1.2}$ सत्यशौच-; $K_{4.5}$ $T_2$ सत्यधर्म-; $D_5$ $T_1$ $G_3$ $M_5$ सर्वे धर्म-; $T_4$ $G_{1.2}$ सर्वे त्याग- (for सत्यागम-). $T_3$ सत्यागममपारणाः. — $G_3$ reads $47^{cd}$, for the first time, after $44^{ab}$. — $^c$) $G_1$ सर्वे (for क्षात्र-). $K_{2.3}$ $Dn_1$ $D_{6.8.9}$ $T_{1.4}$ $M_4$ -रताः (for -पराः). $K_{4.5}$ $D_1$ शांता; B Dn $D_{2-4.6.7}$ $T_{3.4}$ $G_{4.5}$ $M_4$ संतो (for प्राज्ञा). — $^d$) $K_{1.2}$ $D_{4.6.9}$ $T_{1.2.4}$ $G_{1.2.3}$ (both times)$_{.4.5}$ $M_{1-3.5}$ यज्वानः सत्यसंगराः; $M_4$ यज्वनः प्राज्ञसंगराः.

48 $^a$) $K_{3-5}$ $Dn_2$ $D_6$ नु (for नु). — $^b$) $D_5$ $T_1$ $G_3$ $M_5$ न ($D_5$ स) चिंतये (for न चे°). $K_3$ $D_8$ चिंतयामि न चिंतये; $D_6$ $T_{2.4}$ $G_{1.2.4.5}$ $M_{1-4}$ चेतया($G_4$ °मा)नश्च चिंतये. — $^c$) $K_{1.2}$ अथो (for अहो). $K_3$ $D_{8.9}$ पित्त-; $K_{4.5}$ $D_1$ किं नु (for चित्त-). — $^d$) $K_3$ $D_{8.9}$ येन; $G_5$ $M_2$ स्याद्यो; $M_3$ साद्या (for स्याद्वा). $D_6$ वै; $T_3$ मा (for मे). $K_5$ त्रिशु-; $D_8$ वित्त- (for चित्त-). $M_{4.5}$ -विभ्रमाः (for °मः).

49 $^a$) Dn बहुविधा (for °विधं). $T_2$ राजन् (for राजा). — $^b$) $K_{1.2.4.5}$ B $Dn_1$ $D_{1-4}$ विममर्ष; $T_4$ विवमर्श (for विम°). — $^c$) $K_5$ हर्षशोकसमायुक्तश्. — $Dn_2$ reads $49^d$ on marg. — $^d$) $K_1$ चित्त- (for चिन्ता-).

50 $^a$) $K_1$ अहारयच्. $K_{3.4}$ $D_1$ तीव्रं; $G_4$ चेह (for चैव). $K_5$ क्रोधमाहार्य तीव्रं*; $D_9$ क्रोधमाहरयश्चैव. — $^b$) $T_2$ $M_5$ नृप (for नृपः). $K_{3-5}$ $D_{1.8}$ धर्मराजो युधिष्ठिरः. — $K_{1.2}$ om. $50^{cd}$. — $^d$) $K_3$ $D_8$ तदा नृपः; $K_{4.5}$ $B_{2.4}$ $D_{1.9}$ नराधिपः ($K_5$ °प); $D_5$ $T_1$ $G_{3.5}$ $M_{2-5}$ जनाधिप ($G_5$ $M_{2-5}$ °पः); $D_6$ $T_{2.4}$ $G_{1.2.4}$ $M_1$ महामतिः (for युधिष्ठिरः).

51 $^a$) $K_{1.2}$ $D_{5.6}$ S -शोक-; $K_3$ $D_9$ -कोप- (for -गन्ध-). $K_3$ -संयुक्तो (for -संतप्तो). — $^b$) $T_2$ तीव्रशोकम् (for देवदूतम्). $K_3$ $B_4$ $D_9$ तं; $G_3$ हा (for ह). $K_1$ देवदूतमवोचत. — $^c$) $K_1$ दूत; $K_4$ $B_{1.3.5.6}$ Dn $D_{1-4.7}$ $T_3$ तत्र; $K_5$ तात; $B_4$ यत्र (for भद्र). $K_3$ $D_5$ $T_3$ $G_3$ एषां; $G_1$ घोषं (for येषां). $D_6$ $G_1$ च (for त्वं). — $^d$) $T_3$ दूतास् (for दूतस्). $K_{3.5}$ $D_8$ $G_5$ उपांतिके ($G_5$ °कः) (for °कम्).

52 $^a$) $K_3$ $D_{8.9}$ गच्छामि (for यास्यामि). — $^c$) $D_9$ अमी (for इमे). Bom. ed. दूताः (for दूत). — $^d$) $B_3$ $D_5$ दुःखिनो (for सुखिनो).

53 $^a$) $D_6$ सततं; $T_3$ ते तदा; $M_3$ तेन वै (for स तदा). — $^b$) $K_3$ $D_{8.9}$ भारत; $D_{5.6}$ $T_{1.4}$ G M वद्वचः (for धीमता). — $^c$) $D_9$ आजगाम च यत्रास्ते;

जगाम तत्र यत्रास्ते देवराजः शतक्रतुः ॥ ५३
निवेदयामास च तद्धर्मराजचिकीर्षितम् ।
यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ॥ ५४

इति श्रीमहाभारते स्वर्गारोहणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

# ३

वैशंपायन उवाच ।
स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे ।
आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः ॥ १
स्वयं विग्रहवान्धर्मो राजानं प्रसमीक्षितुम् ।
तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः ॥ २
तेषु भास्वरदेहेषु पुण्याभिजनकर्मसु ।
समागतेषु देवेषु व्यगमत्तत्तमो नृप ॥ ३
नादृश्यन्त च तास्तत्र यातनाः पापकर्मिणाम् ।
नदी वैतरणी चैव कूटशाल्मलिना सह ॥ ४
लोहकुम्भ्यः शिलाश्चैव नादृश्यन्त भयानकाः ।
विकृतानि शरीराणि यानि तत्र समन्ततः ।
ददर्श राजा कौन्तेयस्तान्यदृश्यानि चाभवन् ॥ ५

---

$T_3$ $G_4$ $M_4$ जगाम यत्र तत्रास्ते.

54 a) $K_{4.5}$ $B_6$ $D_{1.6}$ तदा; $B_4$ $D_{5.9}$ $T_4$ $G_2$ $M_{4.5}$ च तं (for च तद्). — b) $K_1$ देवराजस्य चेष्टितं. — c) $K_3$ $D_{8.9}$ -राजेन (for -पुत्रेण). — d) $G_5$ स्वयम् (for सर्वम्). $B_{1.2.4}$ $D_1$ एतज्; $T_4$ एवं (for एव). $K_1$ $M_1$ जनाधिपः; $D_9$ नराधिप.

Colophon. — *Adhy. name*: $K_{1.2}$ देवदूतविसर्जनं. — *Adhy. no.* (figures, words or both): $K_{2.4.5}$ $B_6$ Dn $D_{3.7.9}$ S 2 (as in text). — *Śloka no.*: $K_4$ 79; $K_5$ $Dn_1$ $D_{8.9}$ 54.

## 3

1 a) $K_5$ $M_3$ मुहूर्तें (for °र्तं). $K_5$ पार्थेन; $D_8$ पार्थे नु (for पार्थे तु). — b) $D_8$ धर्मपुत्रे युधिष्ठिरे. — c) $G_5$ $M_{2-4}$ कौरव्यं. — d) $K_3$ $D_8$ इंद्र- (for शक्र-).

2 a) $K_{4.5}$ $B_{1.2.4-6}$ Dn $D_{1-4.7}$ $T_3$ स च (for स्वयं). — b) $T_3$ राजा (for राजानं). $K_{1-3}$ $D_9$ $G_4$ प्रप($K_3$ तं प-; $G_4$ तु प)रीक्षितुं; $K_5$ प्रसमीक्षितं; $D_{5.6}$ $T_3$ $G_{1.2}$ $M_1$ संप($D_5$ $G_1$ स प)रीक्ष्य तं; $D_8$ समुदीक्षितुं; $T_1$ $G_{3.5}$ $M_{2-5}$ परिरक्षितुं; $T_2$ संपरीक्षितं (for प्रसमीक्षितुम्). — c) $K_2$ तत्रागच्छत्स; $T_1$ $G_3$ ततो जगाम (for तत्रा°). $B_6$ तत्र (for यत्र). $K_{1-3}$ $D_{5.6.9}$ S (except $T_3$) [आ]स्ते (for [अ]सौ). — d) $K_5$ महामनाः (for युधिष्ठिरः).

3 a) $D_8$ om. (hapl.) from भास्वर up to देवेषु (in 3c). $K_{1.2}$ $B_4$ Dn $D_{2.8}$ $T_3$ भासुर-; $D_7$ [अ]भास्व (for भास्वर-). — c) $D_5$ देशेषु (for देवेषु). $K_4$ सम्यग्गतेषु ($K_4$ व्यगमत्तेषु) देशेषु; $M_2$ समवेतेषु देवेषु. — d) $K_3$ तत्रत्यं (for व्यगमत्). $D_9$ $G_5$ ततो (for तमो). $K_5$ वागमं तं ततो नृप; $D_7$ व्यगमंस्तत्र ये नृप; $G_4$ [अ]प्यगमंत ततो नृप (sic).

4 a) $G_5$ $M_{1-4}$ नापश्यत (for नादृश्यन्त). $D_1$ ततस् (for च तास्). $K_1$ नादृश्यंतश्च तांस्तत्र; $K_5$ नापश्यत नृपस्तत्र; $D_{5.6}$ $T_{1.2.4}$ $G_{1-4}$ $M_5$ नापश्यत तदा त($T_2$ $G_2$ य)त्र. — b) $K_5$ याम-; $B_3$ $T_1$ $G_3$ पुण्य- (for पाप-). $B_{1.3.5.6}$ $D_{4-6}$ T $G_{1-4}$ $M_{1.5}$ -कर्मणां (for -कर्मिणाम्). — c) $K_2$ तत्र; $D_8$ या तत्र (for चैव). $D_{5.6}$ $T_{1.2.4}$ $G_{1.2.4.5}$ M नदीं वैतरणीं चैव ($G_{1.4}$ तत्र). — d) $K_1$ $D_6$ $T_{2.4}$ $G_{1.2.4.5}$ M -शल्मलिना (for -शाल्म°).

5 a) $K_{4.5}$ $B_{1.3}$ लोहकुंभाः; $D_6$ $T_{1.2.4}$ $G_{2.5}$ $M_{2.3.5}$ °कुंभीः; $D_6$ $G_1$ $M_4$ °कुंभी; $D_9$ लोहं कुंभी; $G_3$ लोहकुंड- (for लोहकुम्भ्यः). $K_3$ लोहोत्कुंभ्यः शिलास्तत्र; $G_4$ लोहकुंभीकुलाश्चैव. — b) $D_{5.6}$ $T_{1.2.4}$ $G_{1-4}$ $M_{1.3}$ महाकान्दं($T_2$ °न्द)शकानपि; $G_5$ $M_{2.4.5}$ नापश्यंस्तत्र तत्र ह. — d) $D_9$ यत्र (for तत्र). — e) $B_6$ om.; $G_4$ राजन् (for राजा). $B_{1.5.6}$ Dn $D_{2-4.7}$ $T_3$ कौरव्यस् (for कौन्तेयस्). — f) $K_2$ दृश्यानि (for अदृ°). $K_{3.5}$ वा (for च). $K_4$ तान्यदृश्यान्यथाभवन्; $D_{5.6}$ $T_{1.2.4}$ $G_{1-4}$ $M_1$ तान्सर्वान्सुमहाप्रभान् ($G_3$ °मनाः; $M_1$ °व्रतान्); $G_5$ $M_{2-5}$ तानदृश्यान्म($M_4$ °श्यं म)हाप्रभान्.

ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शिवः ।
ववौ देवसमीपस्थः शीतलोऽतीव भारत ॥ ६
मरुतः सह शक्रेण वसवश्चाश्विनौ सह ।
साध्या रुद्रास्तथादित्या ये चान्येऽपि दिवौकसः ॥ ७
सर्वे तत्र समाजग्मुः सिद्धाश्च परमर्षयः ।
यत्र राजा महातेजा धर्मपुत्रः स्थितोऽभवत् ॥ ८
ततः शक्रः सुरपतिः श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सान्त्वपूर्वमिदं वचः ॥ ९
युधिष्ठिर महाबाहो प्रीता देवगणास्तव ।
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ।
सिद्धिः प्राप्ता त्वया राजँल्लोकाश्चाप्यक्षयास्तव ॥ १०
न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम ।
अवश्यं नरकस्तात द्रष्टव्यः सर्वे राजभिः ॥ ११
शुभानामशुभानां च द्वौ राशी पुरुषर्षभ ।
यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः ।
पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः ॥ १२
भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते ।
तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ १३

---

6 $^{a}$) $K_{1-4}$ $D_{1, 5, 6, 8, 9}$ S ( except $T_3$ ) तत्र ( for ततो ). $K_1$ $G_4$ वायु- ( for वायुः ). — $T_1$ om $6^{b}$–$8^{c}$. — $^{b}$) $D_3$ पुण्यं ( for पुण्य- ). $K_{3, 4}$ $B_{1, 5, 6}$ Dn $D_{2-4, 7, 8}$ $T_3$ $M_5$ शुचिः ; $D_{5, 9}$ $G_{3, 4}$ शुभः ( for शिवः ). — $Dn_2$ reads $6^{c}$–$8^{b}$ on marg. — $^{c}$) $G_2$ ययौ ( for ववौ ). $G_{2, 3, 5}$ $M_3$ देवः ( for देव- ). $K_5$ -समीपस्थौ ( for °पस्थः ). — $^{d}$) $D_9$ सीतलो. $D_{5, 6}$ $T_2$ $G_{1, 5}$ M शीतळोमृ( $D_5$ °लामृ- ; $D_6$ $M_{3-5}$ °लोमृ )तसंमि( $M_1$ °ससि )तः ; $T_4$ $G_{2, 3}$ °ळो मृदुसंमितः ; $G_4$ °ळोमृतसंनिभः.

7 $T_1$ om. 7 ( cf. v. l. 6 ). $Dn_2$ reads 7 on marg. — $^{a}$) $K_3$ मारुतः ; $D_{3, 6}$ $T_{2, 4}$ G $M_{2-5}$ मरुद्भिः ; $D_9$ मह्नतः ( for मरुतः ). $B_6$ शुक्रेण ( for शक्रेग ). — $G_4$ om. $7^{b}$–$8^{a}$. — $^{b}$) $K_5$ तथा ; $D_{1, 3}$ च ह ( for सह ). $K_{1-3}$ $D_{5, 6, 9}$ $T_{2, 4}$ $G_{1-3, 5}$ M वसवश्च ( $D_6$ $G_1$ °स्तु ) सहाश्विना ( $K_3$ $G_1$ $M_2$ °श्विना ; $G_2$ $M_1$ °श्विनौ ). — $^{c}$) $D_3$ साध्य- ( for साध्या ). $D_9$ साध्यादित्यास्तथा रुद्रो. — $^{d}$) $D_9$ $G_3$ च ( for ऽपि ).

8 $T_1$ om. $8^{abc}$ ( cf. v. l. 6 ). $G_4$ om. $8^{a}$ ( cf. v. l. 7 ). $M_1$ om. $8^{ab}$. $Dn_2$ reads $8^{ab}$ on marg. — $^{b}$) $K_{1, 2}$ सिद्धाश्च भरतर्षभ. — $^{c}$) $B_4$ ( marg. as in text ) $D_5$ $G_3$ $M_4$ तत्र ( for यत्र ). — $^{d}$) $B_4$ धर्मसूनुः ( for °पुत्रः ). $K_{4, 5}$ $D_1$ तदा ( for स्थितो ). $K_{1-3}$ $D_{5, 6, 8, 9}$ $T_{1, 2, 4}$ G $M_{2-5}$ स्थितो धर्मसुतोभवत्.

9 $^{a}$) $K_4$ $D_1$ तत्र ( for ततः ). — $^{c}$) $B_2$ [इ]ह ( for [इ]दं ). — $^{d}$) $B_{1, 6}$ शांत्व° ( for सान्त्व° ). $D_4$ इदं ततः ; $D_6$ $T_{2, 4}$ $G_{1, 2, 4}$ $M_1$ हि मानयन् ( for इदं वचः ).

10 Before 10, $M_3$ ins. शक्रः. — $^{a}$) $T_2$ महाबुद्धे ( for °बाहो ). — $^{b}$) $K_1$ सुर- ( for देव- ). $D_{5, 6}$ $T_{1, 2, 4}$ $G_{2-4}$ $M_{1, 2}$ ( *inf. lin.* ), $_{3-5}$ त्वया ; $G_1$ तथा ( for तव ). Bom. ed. लोकाश्चाप्यक्षयास्तव = $10^{f}$. — $K_1$ om. (hapl.) $10^{cdef}$. — $^{c}$) $G_4$ येह्येहि ( sic ). $K_{2-5}$ $B_{1-4, 6}$ $D_{8, 9}$ मनुज- ( for पुरुष- ). — $^{d}$) $K_5$ [अ]-भिभोः ( for विभो ). $D_9$ कृता**वता त्वया. — $^{e}$) $K_5$ सिद्धेः ; $T_3$ $G_4$ सिद्धि- ( for सिद्धिः ). $G_{2, 4}$ प्राप्तास्. $K_{4, 5}$ B Dn $D_{1-4, 7, 8}$ $T_3$ महाबाहो ( for त्वया राजँल्). — $^{f}$) $K_5$ अप्यया ; $G_2$ अक्षयस् ( for °यास् ). $K_3$ $D_8$ जिताः ( for तव ). $D_9$ लोकाथाप्यक्षयास्तव. — After 10, $D_{5, 6}$ $T_{2, 4}$ $G_{1, 2, 4}$ $M_{1, 3}$ ins. :

10* भ्रातृणां सुहृदां चैव गतिर्नित्या सुपूजिता ।

[ $D_5$ पितृणां ( for सुहृदां ). $D_{5, 6}$ $T_4$ $G_2$ नित्यं ( for नित्या ). ]

11 $D_{5, 6}$ $T_{2, 4}$ $G_{1, 2, 4}$ $M_1$ transp. $11^{ab}$ and $11^{cd}$. — $^{a}$) $K_5$ तथा ( for त्वया ). — $^{b}$) $D_{5, 6}$ $T_4$ $G_1$ देव ; $G_2$ देवं ( for चेदं ). $K_{1, 2}$ $T_2$ वचः परं ; $D_{5, 6}$ $T_4$ $G_{1, 2, 4, 5}$ $M_{1-4}$ परं वचः ( for वचो मम ). — $^{c}$) $K_2$ नरकास् ; $D_{5-7}$ S ( except $T_3$ ) °कं ( for °कस् ). $K_5$ $D_5$ $T_1$ $M_2$ तावद् ( for तात ). — $^{d}$) $K_{1, 2, 5}$ द्रष्टव्या ( $K_2$ °व्याः ) ; $D_{5, 6}$ S ( except $T_3$ ) °व्यं ( for °व्यः ).

12 $K_4$ om. $12^{abcd}$. — $^{a}$) $G_3$ चाशुभानां ( for अ° ). — $^{b}$) $D_3$ द्वे ( for द्वौ ). — $^{c}$) $K_2$ om. यः. $T_1$ $G_3$ $B_3$ पूर्वं यः ( by transp. ) ; $D_4$ यत्पूर्वं-. — $^{d}$) $T_1$ $G_3$ नरकम् ( for निरयम् ). Dn $D_{2-5}$ $T_{1, 3}$ $G_3$ एव ( for एति ). $K_5$ न पश्चान्निरयेषु नः ; $D_1$ स पश्चान्निरयं पुनः. — $D_6$ om. ( hapl. ) $12^{ef}$. — $^{e}$) $K_5$ damaged ; $T_1$ $G_1$ च ( for तु ). $D_5$ $T_{2, 4}$ $G_{2-5}$ M पूर्वं निरयभाग्यश्च. — $^{f}$) $D_1$ वै ( for सः ). $K_{4, 5}$ स पश्चात्स्वर्गमेति वै. — $B_{2, 3}$ ins. 11* after 12 ; while $D_3$ ins. 12* after the same.

13 $^{a}$) $K_5$ $D_6$ $T_{1, 3, 4}$ $G_{1-3, 5}$ $M_{1-3}$ भूयिष्ठ- ; $B_{3, 5}$ °ष्ठः ( for °ष्ठं ). $K_5$ -धर्मा ( for -कर्मा ). — $D_3$ om.

व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति ।
व्याजेनैव ततो राजन्दर्शितो नरकस्तव ॥ १४
यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा ।
द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः ॥ १५
आगच्छ नरशार्दूल मुक्तास्ते चैव किल्बिषात् ।
स्वपक्षाश्चैव ये तुभ्यं पार्थिवा निहता रणे ।
सर्वे स्वर्गमनुप्राप्तास्तान्पश्य पुरुषर्षभ ॥ १६
कर्णश्चैव महेष्वासः सर्वशस्त्रभृतां वरः ।
स गतः परमां सिद्धिं यदर्थं परितप्यसे ॥ १७
तं पश्य पुरुषव्याघ्रमादित्यतनयं विभो ।
स्वस्थानस्थं महाबाहो जहि शोकं नरर्षभ ॥ १८
भ्रातॄंश्चान्यांस्तथा पश्य स्वपक्षांश्चैव पार्थिवान् ।
स्वं स्वं स्थानमनुप्राप्तान्व्येतु ते मानसो ज्वरः ॥ १९
अनुभूय पूर्वं त्वं कृच्छ्रमितःप्रभृति कौरव । C. 18. 102 B. 18. 3. 7 K. 18. 3. 2

---

13[b]. — [b]) K2 स्व- (for स). — K1-3 D5. 8 T4 ins. after 13[ab]: B2. 3 after 12:

11* भूयिष्ठं शुभकर्मा यः पूर्वं नरकमश्नुते ।

[ D8 भूयिष्ठ-. K2 तु (for यः). K3 D8 निरयम् (for नरकम्). D5 T4 स पूर्वं नरकं व्रजेत् (for the post. half).]

— K1-3 D5 cont.: D6. 8 S ins. after 12:

12* भूयिष्ठशुभकर्मा त्वमल्पं जिह्मं तवाच्युत ।

[ K1. 2 भूयिष्ठं (for °ष्ठ-). G5 -कर्म ते (sic) (for -कर्मा त्वम्). G3 अल्पजिह्मांस् (for अल्पं जिह्मं). D8 भवानघ (for तवाच्युत). K1. 3 अल्पजिह्मं तवानघ; D6. 8 T1. 4 G1. 2. 4 M4 अल्पजिह्म(D6. 8 T4 G4 °जिह्म)तया( M4 °स्तथा )च्युत (G2 °तः) (for the post. half).]

— [c]) K2 वाम् (for त्वम्). K2 D8. 9 T2 एव; K4 इव (for एवं). T2 [आ]गमितो; T3 क्रमितो (for ग°). — [d]) K5 श्रेयोर्थेवा (sic) (for °र्थिना). B2 तव; B8 सह; D8 विभोः (for नृप). B5 मया श्रेयोर्थिनामपि.

14 [b]) K1 उपचीर्णे-; B3. 6 D7 M4 उपाचीर्णः; T3 G1. 2. 4 उपजीर्णः; G3 सोपचीर्णः; Cn (gloss: वञ्चितः) उपचीर्णः (as in text). — [c]) B6 हि; G3 [इ]व (for [ए]व). D5 गतो; D6 T4 G1. 2 तदा; G4 तथा (for ततो). — [d]) K4 संदृष्टो; M4. 5 दृष्टस्तु (for दर्शितो). D5 T1 G3. 5 M2. 3 दृष्टस्तु नरकस्त्वया; D6 T2. 4 G1. 2. 4 M1 दर्शितं (G1 °तो) नरकं ततः (T2 G4 °व).

15 [a]) K1. 3 D8. 9 च (for [ए]व). K4 पार्था (for भीमस्). — [b]) K3. 5 D9 यथा पार्थो; K4 राजानश्च (for तथा पार्थो). K1 अपि (for तथा). — [c]) D9 तथैव (for द्रौपदी). K1-3 D5. 6. 8 S (except T3) तथैव (K3 D8 °था च) द्रौपदी कृष्णा. — [d]) D9 गता (for गताः).

16 M1 om. 16[ab]. — [b]) K3 D8 सर्वे च; K4 D5. 6 S (except T3; M1 om.) ते चापि (M5 °प-) (for ते चैव). B1-3. 5. 6 Dn D1. 3. 7 T3 कल्मषात् (for किल्बि°). — [c]) K3 B2 (marg. as in text) G1. 5 M स्वपक्ष्याश् (for °क्षाश्). K2 ते; K5 मे (for ये). — [d]) D9 निक्षिता (sic) (for निहता). K4. 5 D1 पार्थिवैराहता रणे. — [e]) K3 D8 एवं; D9 एतैः (for सर्वे). K3 D8 G4 M5 -प्राप्तांस् (for -प्राप्तास्). — [f]) D9 om. तान्पश्य. K5 पुरुषोत्तम; B1. 5. 6 Dn D1. 2. 4. 5. 7 T3 भरतर्षभ; D6 T4 G1. 2 च नरोत्तम (for पुरुषर्षभ). T2 तान्पश्यसि नरोत्तम; G4 क्षपश्य च नरोत्तम (sic); M1 एहि पश्य नरोत्तम.

17 [a]) D9 महेष्वास. K1 कर्णश्चैव महीपः*. — K1. 2 om. 17[b]-19[a]. — [b]) K5 सर्वे (for सर्व-). K3 D5. 6. 8. 9 T1. 2. 4 G1-4 M1. 3-5 सर्वास्त्रविदुषां वरः; G5 M2 सर्वास्त्रविदुदारधीः. — D6 17[cd]. — [c]) G1 सं- (for स). — [d]) K4 T1 -तप्यते; B3 -तप्स्यते; D5 -तप्यसि (for -तप्यसे).

18 K1. 2 om. 18 (cf. v. l. 17). — [a]) D6 T2. 4 G2 त्वं (for तं). T1 तं पश्य पुरुषेणैव. — [b]) T2 विभुं (for विभो). — [c]) D5 T1 G3. 5 M2-5 स्वस्थानं (D5 °ने) च; D6 T2. 4 G1. 2. 4 M1 °ने तं (G1 तु); D9 स्वं स्थानं च (for स्वस्थानस्थं). D8 T2. 4 G1. 2. 4 M1 -बाहुं (for -बाहो). — [d]) T1 G3 लोकं (for शोकं). K3 D9 ततोनघ; K4 नरर्षिभिः; D5. 6 T1. 2. 4 G1-4 M1. 3-5 ततो नृप; D8 परंतप; G5 M2 तवानघ (for नरर्षभ).

19 K1. 2 om. 19[a] (cf. v. l. 18). — [a]) T2 G1. 2. 4 M1 पुत्रांस् (for चान्यांस्). — [b]) K1 corrupt; G5 M स्वपक्ष्यांश् (for °क्षांश्). — [c]) K5 स्वे सत्; D4 स्वयं; D9 स्वस्व- (for स्वं स्वं). K1. 2 D9 G3 -प्राप्ता; T1 -प्राप्तं (for -प्राप्तान्). — [d]) T2 M1. 2 व्येतु ते; G4 वै ततो (for व्येतु ते). T2 मनसो (for मा°). K1 corrupt; B5 व्येतु ते मानसोद्धतः.

20 [a]) Hypermetric. K2 [आ]दितः कृच्छ्रम्; K3 D8 T1 G3 पूर्वं कृच्छ्रं त्वम्; D9 पूर्वंकृच्छ्रं त्वम्; G5 M2 च तत्कृच्छ्रम्; M3. 4 पूर्वं तत्कृ( M3 तं कृ )च्छ्रम् (for पूर्वं

विहरस्व मया सार्धं गतशोको निरामयः ॥ २०
कर्मणां तात पुण्यानां जितानां तपसा स्वयम् ।
दानानां च महाबाहो फलं प्राप्नुहि पाण्डव ॥ २१
अद्य त्वां देवगन्धर्वा दिव्याश्चाप्सरसो दिवि ।
उपसेवन्तु कल्याणं विरजोम्बरवाससः ॥ २२
राजसूयजिताँल्लोकानश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाबाहो तपसश्च फलं महत् ॥ २३
उपर्युपरि राज्ञां हि तव लोका युधिष्ठिर ।
हरिश्चन्द्रसमाः पार्थ येषु त्वं विहरिष्यसि ॥ २४
मान्धाता यत्र राजर्षिर्यत्र राजा भगीरथः ।
दौःषन्तिर्यत्र भरतस्तत्र त्वं विहरिष्यसि ॥ २५
एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी ।
आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ॥ २६
अत्र स्नातस्य ते भावो मानुषो विगमिष्यति ।
गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ २७
एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरम् ।

---

त्वं कृच्छ्रम्). K1 corrupt; B Dn D1-4. 7 T3 कृच्छ्रं पूर्वं चानुभूय; D6 अनुभूय त्वकृच्छ्रंतिम् (sic). —$^{b}$) K4 यत्त:-; K5 D9 ततः- (for इतः-). K1 तै कर्मरिव***. —$^{c}$) G4 यथा (for मया). —$^{d}$) K1-3 D8 वीतशोको (for गत°). K5 गतशोके नरामयः (sic).

21 $^{a}$) Dn1 G3-5 M2. 3 कर्मणा (for °णां). D6 T2. 4 G1. 2 M1 तव (for तात). G3. 5 M2-5 पुण्यानि (for °नां). —$^{b}$) K2 कृतानां; D8 ज्ञानानां; T3 जहानां (sic); G5 M2-5 जातानि (for जितानां). K1 कृतानां तपसां सु[स्व]यं; K3 D9 ज्ञाना(D9 °ति)नां तपसः स्वयं; D5. 6 T2. 4 G1. 2. 4 M1 ज्ञानानां तपसां तथा (D5 च यत्; T2 तदा); T1 चीर्णानां तपसां च यत्; G3 जातानि तपसा च यत्. —$^{c}$) D5. 6 T1. 2. 4 G1-3. 5 M महाभाग (for °बाहो). — K5 B1. 4-6 D4. 7 om. (hapl.) 21$^{c}$–23$^{c}$. —$^{d}$) D9 आप्नुहि; T3 प्राप्नोहि (for प्राप्नुहि). K4 Dn D1-3 T1 पार्थिव (for पाण्डव). K1. 2 फलमाप्नुहि भारत; B2 तपसश्च फलं महत्; B3 तपसः फलमाप्नुहि; G3 फलं प्राप्य हि पांडवाः.

22 K5 B1. 4-6 D4. 7 om. 22 (cf. v. l. 21). —$^{a}$) D9 अस्य; G3 सिद्धास् (for अद्य). K1. 2 D5 T3 G4. 5 M1. 2. 4. 5 त्वा (for त्वां). —$^{b}$) K3 दैत्याश्; M1 दिव्यश् (for दिव्याश्). T3 [ऽ]पि वा; M5 भुवि (for दिवि). —$^{c}$) B2. 3 T1 G1. 3. 5 M कल्याण्यो (B3 °णौ); D8. 9 °ण (for °णं). K1 उपसेवंत कल्याण; D5. 6 T4 G2. 4 °सेव्यंतु कल्याण्यो; T3 °सेव्यंति कळाण्यो (sic). —$^{d}$) K3 D8. 9 -वाससं; K4 Dn D1-3 -भूषणाः (for -वाससः).

23 K5 B1. 4-6 D4. 7 om. 23$^{abc}$ (cf. v. l. 21). B2. 3 om. 23. —$^{a}$) K3 राजन्स्त्वं (for राजसूय-). T2 -कृताँल् (for -जिताँल्). G3. 4 राजसूयार्जिताँल् लोकान्. —$^{b}$) K4 अयमेवासि तद्विधान्; Dn D1-3 स्वयमेवासि ऋद्धितान्; D5. 6 अश्वमेधाभिवर्णितान्; D3 °दिवर्धितान्; T3 °द्रिवर्जितान्; G1 °भिनिर्जितान्. —$^{c}$) G4 प्राप्स्यसि (for प्राप्नुहि). —$^{d}$) B6 महत्फलं (by transp.); Dn D2-4. 7. 9 महाफलं. M1 विद्यया सिद्धिमाप्नुयाः.

24 $^{a}$) K3 D8 तु; D5. 6 S (except T3) वै (for हि). — T1 om. 24$^{c}$–26$^{d}$. —$^{c}$) K2 D9 T2 G1. 2. 4 M1 -समः (for -समाः). B6 तात (for पार्थ). —$^{d}$) K3 D8. 9 तेषु; G4 येषां (for येषु). D5. 6. 9 T2. 4 G M2-5 विचरिष्यसि (for विह°).

25 T1 om 25 (cf. v. l. 24). K1. 2 om. (hapl.) 25. —$^{a}$) B6 चैव (for यत्र). —$^{c}$) K4 (marg. as in text) Dn दौष्कंतिर्; K5 B2 दौष्वंतिर् (for दौःषन्तिर्). K3 D8. 9 भरतश्च गतो यत्र; D5. 6 T2. 4 G M दौष्यं(T2 G2 M1. 2. 5 °ष्षं)तिर्भरतो यत्र. —$^{d}$) D5. 6. 9 T4 G M2. 4. 5 विचरिष्यसि (for विह°).

26 T1 om. 26 (cf. v. l. 24). T4 om. 26$^{ab}$. M5 om. from 26 up to the end of this adhy. —$^{ab}$) G2 यैषा; G3 एका (for एषा). D4 देवी (for देव-). K3 D8 transp. पुण्या and पार्थ. K1 चैव (for पुण्या). T2 एषा पुण्या देवनदी (for 26$^{a}$). K5 पार्थस्त (for पार्थ). B2 -भाविनी; G4 -पाविनी (for -पावनी). — D8 om. (? hapl.) 26$^{d}$–28$^{a}$. G1 om. 26$^{d}$. —$^{d}$) K2 अत्याप्लुत्य गमिष्यसि.

27 D6 M5 om. 27 (cf. v. l. 26). D3 om. 27. D5 T1. 2. 4 G M1-4 read 27 after 30. —$^{a}$) B4 D5 तत्र (for अत्र). K4 स्नोते हि; K5 [अ]स्नाते हि; D1 स्नातो हि (for स्नातस्य). B1. 5. 6 Dn D2. 4. 7 T3 भावस्ते (by transp.); T4 G1. 3 ते देहो (G1 °वो). —$^{b}$) K1 G5 M1-4 मानुष्यो (for °षो). K2 G1. 5 M2 [ऽ]पि; D5 T1 G3 [ऽ]प-; T2. 4 G2 [ऽ]य; G4 [ऽ]ति- (for वि-). K4. 5 मानुषो (K5 °ष्यो) विगलिष्यति (K5 °सि). —$^{c}$) M1 न तु (for गत-). —$^{d}$) B2 गतसंज्ञो; D5 T1. 2 G1. 3-5 M1-4 मु(T1 त्य)क्तसंगो;

धर्मो विग्रहवान्साक्षादुवाच सुतमात्मनः ॥ २८
भो भो राजन्महाप्राज्ञ प्रीतोऽस्मि तव पुत्रक ।
मद्भक्त्या सत्यवाक्येन क्षमया च दमेन च ॥ २९
एषा तृतीया जिज्ञासा तव राजन्कृता मया ।
न शक्यसे चालयितुं स्वभावात्पार्थ हेतुभिः ॥ ३०
पूर्वं परीक्षितो हि त्वमासीद्द्वैतवनं प्रति ।
अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ॥ ३१
सोदर्येषु विनष्टेषु द्रौपद्यां तत्र भारत ।
श्वरूपधारिणा पुत्र पुनस्त्वं मे परीक्षितः ॥ ३२
इदं तृतीयं भ्रातॄणामर्थे यत्स्थातुमिच्छसि ।
विशुद्धोऽसि महाभाग सुखी विगतकल्मषः ॥ ३३
न च ते भ्रातरः पार्थ नरकस्था विशां पते ।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ ३४
अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ।
ततस्त्वया प्राप्तमिदं मुहूर्तं दुःखमुत्तमम् ॥ ३५
न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ । C. 18. B. 18. K. 18.

T4 G2 °शोको (for °वैरो). M1 भविष्यति (for °सि).

28 M5 om. 28; D5 om. $28^{a}$ (for both, cf. v. l. 26). T1 om. $28^{ab}$. G1 om. $28^{a}$. —$^{a}$) K5 देवेंद्र; T2 देवेशे; G3 राजेंद्र (for देवेन्द्रे). —$^{b}$) K4 राजानं तं (for कौरवेन्द्रं). —$^{d}$) G4 [आ]संतम् (sic) (for सुतम्).

29 M5 om. 29 (cf. v. l. 26). —$^{a}$) K1.2 महाराज; D9 सुप्राज्ञ (submetric) (for महाप्राज्ञ). —$^{b}$) K3 [ऽ]हं (for ऽस्मि). G4 मम (for तव). K4.5 D1 भारत (for पुत्रक). — G3 om. $29^{c}$–$30^{b}$. —$^{c}$) K5 T3 सद्- (for मद्-). K2 -भक्तः; D8 -भक्ता (for -भक्त्या). K5 सम- (for सत्य-). D8 -वाक्यैश्च (for -वाक्येन). —$^{d}$) D5.6 T1.2.4 G1.2.4.5 M1–3 शमेन (for क्षमया).

30 M5 om. 30 (cf. v. l. 26). G3 om. $30^{ab}$ (cf. v. l. 29). —$^{a}$) K2 तृतीय-; G4 °यं (for °या). —$^{b}$) K5 transp. तव and राजन्. K1.2 त्वयि राजन्मया कृता. —$^{c}$) G2 शक्यते. —$^{d}$) B4 partly damaged. D8 स्वभावान्. B1.5.6 Dn D2–4.7 T3 हेतुतः (for °भिः). K4.5 D1 स्वभावात्त्वं हि पार्थिव; T1 °वैर्भावहेतुभिः; G3 स्वभावार्थाय हेतुभिः. — After 30, D5 T1.2.4 G M1–4 read 27.

31 M5 om. 31 (cf. v. l. 26). —$^{a}$) K3 मे; K4.5 D5.6.8 T1.2.4 G M2–4 [ऽ]सि (for हि). M1 त्वाम् (for त्वम्). —$^{b}$) M1 partly damaged. K1.2 D9 G1.2.5 M1–3 आसीद्; D5.6 T1.4 G3.4 मया (for आसीर् as in M4 only). K3 B D7 आसीद्द्वैतवने मया (K3 पुरा; B1.5.6 तदा); K4.5 Dn D1–4.8 T2.3 तत्र द्वै(Dn D2.4 T2 प्रश्नाद्द्वै; D3 T3 प्रश्नान्द्वै)तवने मया. — $31^{cd}$ damaged in M1. —$^{c}$) K5 आरणी-; T3 अरणी- (for °णी-). —$^{d}$) K4 तत्र; D5 तं च (for तच्च). G3 तं च विस्तीर्णवानसि; M3 तच्च निस्तीर्यवानसि.

32 M5 om. 32 (cf. v. l. 26). —$^{a}$) B2 सोदरेषु; D1 सौदर्येषु (for सो°). G3 निविष्टेषु; M1 विमुक्तेषु (for विनष्टेषु). K1.2 सोदरेषु च सर्वेषु; D9 सौदर्येषु विनिष्टेषु (sic). —$^{b}$) K5 Dn2 D2–4.7 G5 M3.4 द्रौपद्यास्; Dn1 T3 G3 °द्या (for °द्यां). K2 B4 D5.6.8.9 T1.2.4 G M2–4 चैव (for तत्र). K1.3 द्रौपद्यां चै(K3 °द्या चै)व भारत; M1 द्रौपद्यां च पुनस्त्विह. — T1 om. $32^{cd}$. —$^{c}$) K3.5 B5 D5.6.9 G3 स्वरूप-; G4 श्वारूप- (for श्व°). K2 -धर्मिणा (for -धारिणा). K3 D8.9 चैव; B6 Dn2 तत्र; M3 पार्थ (for पुत्र). —$^{d}$) Dn1 पुत्र त्वं; M1 द्वितीयं (for पुनस्त्वं). K4.5 D1 हि (for मे).

33 M5 om. 33 (cf. v. l. 26). $33^{ab}$ is damaged in M1. —$^{a}$) Dn D2–4 इमं (for इदं). —$^{b}$) K5 अर्थवत्; D6 T1.2.4 G1.2.5 M2–4 अर्थे ह (D6 T4 G1.2 हि; T1 यः); T3 मध्ये यत्; G4 corrupt (for अर्थे यत्). K5 अर्हसि; G4 इच्छति (for °सि). —$^{c}$) G2 हि (for ऽसि). —$^{d}$) K5 स्वर्गा (sic); D6 T4 G2 सुखं (for सुखी).

34 M5 om. 34 (cf. v. l. 26). —$^{a}$) D5.6 T1.2.4 G M1–4 पंच (for पार्थ). —$^{b}$) K1.2 B1.4–6 Dn D2–4.7 T3 नरकार्हा (for °कस्था). —$^{d}$) K1.2 प्रदर्शिता (for प्रयोजिता).

35 M5 om. 35 (cf. v. l. 26). K1.2 om. $35^{ab}$. $35^{ab}$ is damaged in M1. —$^{a}$) B5 Dn D2–4 T3 नरकास्; D5.6 T1.2.4 G M2–4 नरकं (for °कस्). —$^{b}$) B2.5 Dn D2–6 T G M2–4 द्रष्टव्यं (B5 Dn D2–4 T3 °व्याः) (for °व्यः). —$^{c}$) K3 एवं; B4 अतस् (for ततस्). —$^{d}$) M1 मुहूर्तं स्वधियोत्तमं.

कर्णो वा सत्यवाक्शूरो नरकार्हाश्चिरं नृप ॥ ३६
न कृष्णा राजपुत्री च नरकार्हा युधिष्ठिर ।
एह्येहि भरतश्रेष्ठ पश्य गङ्गां त्रिलोकगाम् ॥ ३७
एवमुक्तः स राजर्षिस्तव पूर्वपितामहः ।
जगाम सह धर्मेण सर्वैश्च त्रिदशालयैः ॥ ३८
गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम् ।
अवगाह्य तु तां राजा तनुं तत्याज मानुषीम् ॥ ३९
ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः ।
निर्वैरो गतसंतापो जले तस्मिन्समाप्लुतः ॥ ४०
ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः ।
धर्मेण सहितो धीमान्स्तूयमानो महर्षिभिः ॥ ४१

इति श्रीमहाभारते स्वर्गारोहणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

36 $M_{5}$ om. 36 ( cf. v. l. 26 ). — $^{a}$) $D_{6}$ $T_{1,2,4}$ $G_{1-3,5}$ $M_{1-4}$ सव्यसाची भीमसेनो ( $T_{1}$ $G_{3}$ स भीमो वा ). — $^{b}$) $D_{5,6}$ $T_{1,2,4}$ G $M_{2-4}$ यमौ वा ( $D_{3}$ $T_{4}$ $G_{1,2,4}$ तौ ) सुकुमारकौ; $M_{1}$ न यमौ सुकुमारकौ. — $^{c}$) $K_{1,4,5}$ $D_{1,5}$ $G_{4}$ सत्यवाञ्छ ( for °वाक् ). $D_{9}$ -परो ( for शूरो ). — $^{d}$) $K_{5}$ नरकार्हे; $D_{1}$ °र्हश्च ( for °र्हाश्च ). $K_{1}$ विभो; $D_{8}$ नृपः; $T_{2,4}$ $G_{2,5}$ $M_{2-4}$ न च ( for नृप ). $T_{1}$ निरयार्हा न ते नृप; $M_{1}$ नरकार्हौ महातपाः.

37 $M_{5}$ om. 37 ( cf. v. l. 26 ). — $^{a}$) $T_{2}$ $G_{1,4}$ सा ( for न ). $K_{3}$ वा; $T_{2}$ $G_{2}$ न ( for च ). — $^{b}$) $K_{5}$ नरकार्हौ; $D_{6}$ नरकस्था ( for °कार्हा ). Bom. ed. कथंचन ( for युधिष्ठिर ). — $D_{3}$ reads $37^{cd}$ on marg. — $^{c}$) $D_{9}$ भारत- ( for भरत- ). — $^{d}$) $D_{5,6}$ $T_{2,4}$ चेमां ( for गङ्गां ). $T_{1}$ G $M_{2-4}$ पश्य चेमां त्रि( $G_{3}$ चैनां त्रि )-लोकगां ( $M_{3}$ °गाः ); $M_{1}$ पश्य लोकान्दिवौकसां.

38 $M_{5}$ om. 38 ( cf. v. l. 26 ). $D_{3}$ om. $38^{a}$–$39^{b}$. Before 38, $D_{5,6,9}$ S ( $M_{5}$ om. ) ins. वैशंपायन उवाच. — $^{a}$) $K_{1,2}$ $T_{3}$ तु ( for स ). — $^{b}$) $D_{8}$ पुत्र ( for पूर्व- ). — After $38^{ab}$, $M_{1}$ ins.:

13* महागुरोश्च शुश्रूषा वेदान्तश्र[ °नां श्र ]वणं तथा ।
पूजिते ब्रह्मविच्छ्रेष्ठैः स्वगृहे शिवलिङ्गके ।
मद्वंशजानां न दान्तं शिवादाधिक्यबुद्धिता ।
स्वायंभुवादात्रयाद्दौ ( sic ) भवेत्तव वरादिह ।
अस्मादाधिक्यबुद्धिश्चेदनाय नृणां ह सा( sic ) । [5]
मद्वंशजानां सर्वेषां मास्तु सा त्वदनुग्रहात् ।
इत्युक्त्वा धर्ममुद्दिश्य महान्तं नरमादरात् ।
उवाच किंचिदुद्दिश्य त्वादृशा तु जनाधिप ।

— Before $38^{cd}$, $M_{1}$ ins. युधिष्ठिरः. — $^{d}$) $K_{3-5}$ $B_{1-3}$ Dn $D_{1,2,4,5,7,8}$ $T_{1,3}$ $G_{4}$ $M_{3}$ त्रिदिवालयैः ( for °दशालयैः ).

39 $M_{5}$ om. 39 ( cf. v. l. 26 ). $D_{3}$ om. $39^{ab}$ ( cf. v. l. 38 ). — $^{a}$) $D_{8}$ स्नातुं ( for पुण्यां ). — $^{b}$) $K_{3}$ तां स्नातुम्; $K_{4}$ धावनीम्; $D_{8}$ तां शुभाम्; $T_{3}$ $M_{4}$ पावनाम् ( for °नीम् ). $K_{5}$ -संस्तुतां; $M_{2}$ ( *sup. lin.* ) -संस्कृतां ( for -संस्तुताम् ). $G_{4}$ पावनीं मणिसंस्कृतां. — $D_{3}$ reads $39^{c}$–$41^{b}$ on marg. — $^{c}$) $K_{5}$ $D_{5,6}$ $T_{4}$ $G_{2,4}$ स तां; $B_{1,3,5,6}$ Dn $D_{2-4,7}$ $T_{3}$ $G_{1,3}$ ततो ( for तु तां ). $G_{4}$ राज- ( for राजा ). — $^{d}$) $D_{9}$ तत्याज मानुषीं तनुं.

40 $M_{5}$ om. 40 ( cf. v. l. 26 ). $D_{3}$ reads 40 on marg. — $^{a}$) $K_{1}$ -वसुरूपा ( for -वपुर्भूत्वा ). $B_{3}$ धृत्वा ( for भूत्वा ). — $K_{1,2}$ $M_{1}$ om. ( hapl. ) $40^{c}$–$41^{b}$. — $^{d}$) $D_{5}$ जीवे तस्मिन्समाप्लुतं.

41 $M_{5}$ om. 41 ( cf. v. l. 26 ). $K_{1,2}$ $M_{1}$ om. $41^{ab}$ ( cf. v. l. 40 ). $D_{3}$ reads $41^{ab}$ on marg. — $^{a}$) $D_{5,6}$ $T_{1,4}$ $G_{2-4}$ वृतो ययौ ( by transp. ). $K_{3}$ $D_{8,9}$ ययौ परिवृ( $D_{9}$ °स )तो देवैः. — $^{b}$) $B_{1}$ महामतिः ( for युधिष्ठिरः ). — $^{c}$) $D_{5}$ राजन् ( *for* धीमान् ). — $^{d}$) $K_{2}$ महात्मभिः; $T_{1}$ $G_{3}$ मनीषिभिः ( for महर्षिभिः ). — After 41, N ( except $D_{5,6}$ ) $T_{3}$ ins.:

14* यत्र ते पुरुषव्याघ्राः शूरा विगतमन्यवः ।
पाण्डवा धार्तराष्ट्राश्च स्वानि स्थानानि भेजिरे ।

[ ( L. 1 ) $K_{5}$ -व्याघ्र ( for -व्याघ्राः ). $K_{4,5}$ *$D_{8}$* स्थिता ( for शूरा ). $B_{1}$ -कल्मषाः ( for -मन्यवः ). — ( *L. 2* ) $K_{5}$ धार्तराष्ट्रास्च ( for °ष्ट्राश्च ). $K_{2}$ स्थानानि स्वानि भेजिरे ( for the post. half ). ]

Colophon om. in $M_{5}$. — *Adhy. name :* $K_{1,2}$ धर्मसंदेशः; $D_{9}$ युधिष्ठिरस्वर्गगमनं. — *Adhy. no.* ( figures, words or both ): $K_{2}$ 4; $K_{1,5}$ $B_{6}$ Dn $D_{3-6}$ S ( $M_{5}$ om ) *3* ( *as* in text ). — *Śloka no.:* $K_{4}$ 22; $K_{5}$ 43; *$D_{9}$* 45.

# ४

वैशंपायन उवाच ।

तो युधिष्ठिरो राजा देवैः सर्षिमरुद्गणैः ।
ज्यमानो ययौ तत्र यत्र ते कुरुपुंगवाः ॥ १
दर्श तत्र गोविन्दं ब्राह्मेण वपुषान्वितम् ।
नैव दृष्टपूर्वेण सादृश्येनोपसूचितम् ॥ २
ीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितम् ।
चक्रप्रभृतिभिर्घोरैर्दिव्यैः पुरुषविग्रहैः ।
उपास्यमानं वीरेण फल्गुनेन सुवर्चसा ॥ ३
अपरस्मिन्नथोद्देशे कर्णं शस्त्रभृतां वरम् ।
द्वादशादित्यसहितं ददर्श कुरुनन्दनः ॥ ४
अथापरस्मिन्नुद्देशे मरुद्गणवृतं प्रभुम् ।
भीमसेनमथापश्यत्तेनैव वपुषान्वितम् ॥ ५
अश्विनोस्तु तथा स्थाने दीप्यमानौ स्वतेजसा
नकुलं सहदेवं च ददर्श कुरुनन्दनः ॥ ६

---

1 b) K3 D3.8.9 T4 G2 सह; K4.5 D1 अथ (for सर्षि-). — c) B2.3.5.6 Dn D2–4.7 T3 स्तूयमानो (for पूज्य°).

2 D5.6 S (except T3) om. 2ab. — b) D9 ब्रह्माणं (for ब्राह्मेण). — c) G5 M1.2.4 तेन वै (M1 सं-) (for तेनैव). G3 [अ]दृष्ट- (for दृष्ट-). — d) B (except B2) Dn D2–7 S एव; D1 उत (for उप-). D8 T2.4 G1.2.5 M -पूजितः (M4 °तं); G4 -सूचितः (for °तम्). K3 यत्र ते कुरुपुंगवाः; K5 सादृश्ये तां न सूचितं.

3 a) D6 T4 दीप्यमानः (for °मानं). K4 reads from स्ववपुषा up to उपास्यमानं (in 3e) on marg. K1.2.5 स (for स्व-). — K5 reads 3bc twice. — b) G3 वस्त्रैर् (for अस्त्रैर्). D8 T2.4 G1.2.4 उपासितं (D6 T4 °तः) (for उपस्थितम्). D5 दिव्यास्त्रैस्तैरुपास्थितं. — cd) D6 G3 शक्र- (for चक्र-). K3 D8 दिव्यैः शुभैः (for घोरैर्दिव्यैः). — e) K1 उपास्यमाणं; K2 °मानो; D8 °मान- (for °मानं). D5.6 T2.4 G M वि(M5 जि)ष्णुं च; T1 सततं (for वीरेण). — f) K1.5 फल्गुणेन. D5.6 S (except T3) फल्गुनं च सुवर्चसं. — After 3, N (except D5.6) T3 ins.:

15* तथास्वरूपं कौन्तेयो ददर्श मधुसूदनम् ।
तावुभौ पुरुषव्याघ्रौ समुद्वीक्ष्य युधिष्ठिरम् ।
यथावत्प्रतिपेदाते पूजया देवपूजितौ ।

[ (L. 1) K1–3 D8.9 -रूपं हि (for -स्वरूपं). K5 यथास्वरूपं कौंतेयं (for the prior half). K1–3 B2 (marg.) D8.9 ददर्श भ्रातरं नरं (for the post. half). —(L. 2) K5 B2–4 Dn2 D8 समुदीक्ष्य; D9 समुदीक्षा (for °द्वीक्ष्य). — (L. 3) K3 B2.4 D8.9 यथार्हं (for °वत्). K1 यथार्हे प्रतिपादाते (sic); K2.5 यथार्हं प्रतिपद्यस्तां (K5 °पेदौ तौ); Dn यथावत्प्रतिपेदेते (for the prior half). K3 D8 लोक- (for देव-). ]

On the other hand, G4 ins. after 3:

16* ददर्श राजा धर्मात्मा कुरुवंशयशस्करः ।

4 K2 transp. 4 and 5. — a) K2 तथा देशे; K3 D7 पुनः स्थाने; K4 Dn2 D2 G5 M2–5 तथोद्देशे; D4 G4 तदा देशे; D5.6 T3.4 G1–3 M1 ततो देशे (for अथोद्देशे). K5 अत्र रश्मिस्तथोद्देशे (sic); D8 अपरस्मिन्पुनः स्थाने; T1 अथ तस्मिन्समुद्देशे. — b) K5 वरः (for वरम्). — K4 reads 4cd on marg. — c) K3 D9 -संकाशं; B1.3.5 Dn D2.3.5.7 T1.3 G3.4 M5 -सदृशं (for -सहितं). — d) K1.5 D5 -नंदन (for °नः).

5 K2 transp. 4 and 5. — a) K3 D8 T2.4 G1.2.4.5 M1–4 तथा; D5 T1 G3 M5 ततो (for अथ). K2 ततोद्देशे (for उद्देशे). K4.5 D1 य(D1 अ)थाप(K5 °व)रे समुद्देशे; D8.9 तथापरस्मिन्देशे तु (D9 च). — b) G1 -भृतं (for -वृतं). K1.2 M5 प्रभुः; K5 D8 T4 G2.3 शुभं (for प्रभुम्). K3 D8.9 पूज्य(D8 °ज)मानं मरुद्गणैः. — c) K1 D9 तथा; K2.3 D8 तदा (for अथ). — d) K1.2 दिव्येन; K5 तैरेव; D4 दीप्तेन (for तेनैव). K1 वृतं; D7 M5 स्थितं (for [अ]न्वितम्). — After 5, N (except D5.6) T3 ins.:

17* वायोर्मूर्तिमतः पार्श्वे दिव्यमूर्तिसमन्वितम् ।
श्रिया परमया युक्तं सिद्धिं परमिकां गतम् ।

[ (L. 1) K4.5 D1 वायुमूं(K4 °युमू)र्तिस्त(D1 °र्ति त)तः पार्श्वे (for the prior half). K1.2 दिव्यगंध-; K4 °रूप- (for °मूर्ति-). K3 D8.9 वायोर्मूर्तिधरं वीरं साक्षाद्देवं प्रभंजनं. — (L. 2) K1.2 D9 श्रिया युक्तं परमया (for the prior half). K4 परमकां (for °मिकां). T3 गतिं (for गतम्). ]

6 a) K1 D5 T1.2 G3–5 M1.2.4.5 अश्विनोश्च; K2 D6 T4 G1.2 M3 °नौ च (for °नोस्तु). D5 T1 G3 ततः

तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीम् ।
वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्चसम् ॥ ७
अथैनां सहसा राजा प्रष्टुमैच्छद्युधिष्ठिरः ।
ततोऽस्य भगवानिन्द्रः कथयामास देवराट् ॥ ८
श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता ।
अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर ॥ ९
द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता ।
रत्यर्थं भवतां ह्येषा निर्मिता शूलपाणिना ॥ १०
एते पञ्च महाभागा गन्धर्वाः पावकप्रभाः ।
द्रौपद्यास्तनया राजन्युष्माकममितौजसः ॥ ११
पश्य गन्धर्वराजानं धृतराष्ट्रं मनीषिणम् ।
एनं च त्वं विजानीहि भ्रातरं पूर्वजं पितुः ॥ १२
अयं ते पूर्वजो भ्राता कौन्तेयः पावकद्युतिः ।
सूर्यपुत्रोऽग्रजः श्रेष्ठो राधेय इति विश्रुतः ।
आदित्यसहितो याति पश्यैनं पुरुषर्षभ ॥ १३
साध्यानामथ देवानां वसूनां मरुतामपि ।

---

(for तथा). —$^{b}$) $K_3$ $D_9$ दीप्यमानं; $D_6$ $T_4$ °माने (for °मानौ). $K_1$ सु- (for स्व-). —$^{d}$) $D_{5,8,9}$ -नंदनं ($D_5$ °न).

7 $^{a}$) $D_5$ $G_8$ ततो (for तथा). $K_1$ पंचालीं; $D_8$ पांचालिं. —$^{b}$) $B_4$ -शालिनीं; $D_8$ -गंधिनीं (for -मालिनीम्). $D_{5,6}$ S (except $T_8$) कृष्णामु($G_4$ उत्तमो)त्पलगंधिनीं. — After $7^{ab}$, $K_1$ ins.:

18* दिव्येन वपुषा युक्तां दिव्यभूषणभूषिताम् ।
तां दृष्ट्वा धर्मराजानमुवाच च शचीपतिः ।

— $K_{1,2}$ om. $7^{c}$–$9^{b}$. —$^{d}$) $D_{5,6}$ $T_{1,2,4}$ G M सूर्य- (for अर्क-). $K_5$ $T_{2,8}$ $G_{8,4}$ -वर्चसा ($T_2$ °सां); $M_{4,5}$ -वर्चसि (for °सम्). $K_3$ तिष्ठंती स्वेन तेजसा; $D_8$ तिष्ठती सूर्यवर्चसां (sic); $D_9$ तिष्ठंती सूर्यतेजसा.

8 $K_{1,2}$ om. 8 (cf. v. l. 7). —$^{a}$) $K_3$ $D_9$ न चैनां; $B_8$ $D_8$ तथैनां; Dn $D_{2-4}$ अखिलं; $D_{5,6}$ $T_{2,4}$ G M तत्रैनां; $T_1$ वज्रिणं (for अथैनां). —$^{b}$) $K_4$ $D_5$ $T_{1,8}$ $G_3$ द्रष्टुम्; $M_{2,5}$ स्प्रष्टुम् (for प्रष्टुम्). $K_8$ इच्छेद्; $K_4$ $D_8$ इच्छन् (for ऐच्छद्). —$^{c}$) $D_{5,8}$ तत्तस्य; $T_1$ $G_2$ ततः स (for ततोऽस्य). — For $8^{cd}$, $D_9$ subst.:

19* ततोऽस्य कथयामास भगवान्वै पुरंदरः ।

9 $K_{1,2}$ om. $9^{ab}$ (cf. v. l. 7). —$^{a}$) $K_5$ श्रीरेव; $G_8$ स्थितैषा; $G_4$ श्रीकृष्णा (for श्रीरेषा). $D_{5,7}$ नूनं; $D_9$ राजन् (for -रूपा). —$^{b}$) $K_5$ त्वदर्थं. $B_{1,5}$ $D_{1,7}$ मानुषीं; $B_{2,4,6}$ $T_3$ मानुषान् (for °षं). $B_3$ $D_{5,6}$ $T_{1,2,4}$ G M त्वदर्थं ($B_3$ °र्थे) मानुषी कृता. — $T_1$ om. $9^{cd}$. —$^{cd}$) $D_{5,6}$ $T_{2,4}$ $G_{1-3,5}$ $M_{1-3}$ लक्ष्मीर्देवी; $G_4$ लक्ष्मीर्दिव्या (for अयोनिजा). $D_4$ देव- (for लोक-). $K_{1,2}$ transp. लोककान्ता ($K_1$ °कर्ता) and पुण्यगन्धा.

10 $K_{4,5}$ B Dn $D_{1-4,7}$ $T_8$ transp. $10^{ab}$ and $10^{cd}$. —$^{b}$) $M_1$ -धारिता (for -जीविता). $K_8$ $D_{8,9}$ भवद्भिः सह संगता. —$^{cd}$) $K_{4,5}$ $D_1$ transp. भवतां and निर्मिता. $T_4$ $G_{2,3,5}$ $M_2$ भवतो; $G_1$ $M_5$ °ता (for °तां). $K_1$ एषा (for ह्येषा). $K_1$ विहिता; $K_2$ निहता (sic) (for निर्मिता).

11 $^{b}$) $B_4$ (marg. as in text) गंधर्वाः पावकोपमाः. —$^{c}$) $K_1$ द्रौपदी- (for °द्यास्). $K_{4,5}$ $D_1$ पंच (for राजन्). —$^{d}$) $K_3$ $D_{5,8,9}$ $T_{1,2}$ $G_{1,3,5}$ M चामितौजसः. $D_6$ युष्मान्वामिततेजसः; $G_4$ सुवर्चाश्चामितौजसः.

12 $K_5$ reads 12 on marg. —$^{a}$) $K_5$ परं (for पश्य). $D_5$ $T_1$ $G_3$ $M_5$ -राजं तु (for -राजानं). —$^{b}$) $K_1$ च पांडव; $K_{2,3}$ $D_{5,6,8,9}$ S (except $T_8$) च पार्थिवं (for मनीषिणम्). —$^{c}$) $K_{1,2}$ $M_8$ एतमंधं; $K_8$ एतमेव; $K_{4,5}$ B $D_{1-3,7}$ एवं ($K_5$ येन; $B_2$ एव) स त्वं; $D_4$ एनं त्वं च; $D_5$ एवमद्धा; $D_6$ $T_{2,4}$ $G_{1,2,4,5}$ $M_{1,2,4,5}$ एतद($M_1$ °म)र्थं; $D_8$ एनमंधं; $T_1$ एनमस्था; $T_3$ एवं च त्वं (for एनं च त्वं). $D_9$ एनमन्वविजानीहि; $G_3$ ये समर्था विजानंति. —$^{d}$) $K_8$ पूजितं (for पूर्वजं).

13 $^{a}$) $K_3$ पूर्वको (for °जो). —$^{b}$) $K_{1,2}$ -प्रभः (for -द्युतिः). —$^{c}$) $K_2$ Bom. ed. सूतपुत्राग्रजः ($K_2$ °त्रोग्रजः) (for सूर्यपुत्रोऽग्रजः). $K_4$ गतः; $G_1$ रथ-; $G_4$ युधि; $G_5$ $M_2$ [अं]गजः (for ऽग्रजः). $K_3$ $D_8$ ज्येष्ठो (for श्रेष्ठो). $K_5$ सर्वपुत्रोग्रजः श्रेष्ठो; $D_6$ सूर्यपुत्रो महातेजा; $M_8$ °पुत्रोग्रतेजाश्च. — $K_2$ reads $13^{e}$–$14^{b}$ on marg. —$^{e}$) $T_2$ आदित्यः (for °त्य-). $K_{1,2}$ [ऽ]भ्येति; $D_{5,6}$ S (except $M_5$) भाति (for याति). —$^{f}$) $K_3$ $D_8$ कुरुसत्तम; $K_4$ $B_{1,2,4-6}$ Dn $D_{2-4,7}$ $T_8$ पुरुषर्षभ; $D_5$ $G_3$ भरतर्षभ.

14 $Dn_1$ transp. 14 and 15. —$^{a}$) $D_8$ अभि-; $M_5$ अपि (for अथ). $K_{1,2}$ दैत्यानां (for देवानां). —$^{b}$) $K_4$ Dn $D_{2-4}$ $T_8$ विश्वेषां; $D_7$ मुनीनां (for वसूनां). $K_{4,5}$ महताम् (for मरुताम्). —$^{c}$) $G_3$ पंच

गणेषु पश्य राजेन्द्र वृष्ण्यन्धकमहारथान् ।
सात्यकिप्रमुखान्वीरान्भोजांश्चैव महारथान् ॥ १४
सोमेन सहितं पश्य सौभद्रमपराजितम् ।
अभिमन्युं महेष्वासं निशाकरसमद्युतिम् ॥ १५
एष पाण्डुर्महेष्वासः कुन्त्या माद्र्या च संगतः ।
विमानेन सदाभ्येति पिता तव ममान्तिकम् ॥ १६
वसुभिः सहितं पश्य भीष्मं शान्तनवं नृपम् ।
द्रोणं बृहस्पतेः पार्श्वे गुरुमेनं निशामय ॥ १७
एते चान्ये महीपाला योधास्तव च पाण्डव ।
गन्धर्वैः सहिता यान्ति यक्षैः पुण्यजनैस्तथा ॥ १८
गुह्यकानां गतिं चापि केचित्प्राप्ता नृसत्तमाः ।
त्यक्त्वा देहं जितस्वर्गाः पुण्यवाग्बुद्धिकर्मभिः ॥ १९ C. 18. B. 18. K. 18.

इति श्रीमहाभारते स्वर्गारोहणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

(for पश्य). — $^{d}$) $D_{5.6}$ S (except $T_3$) वासुदेवपदानुगान्. — $^{e}$) $M_1$ om. from किप्रमुखा up to महेष्वा (in $16^{a}$). — $^{f}$) $K_{4.5}$ $D_1$ एतांश्च (for भोजांश्च). $K_2$ om. महा. $K_{1-3}$ $B_{1.3.5}$ Dn $D_{2-4.7-9}$ $T_3$ $M_5$ महाबलान् (for °रथान्).

15 $M_1$ om. 15 (cf. v. l. 14). $Dn_1$ transp. 14 and 15. — $^{a}$) $G_3$ सह संपश्य (for सहितं पश्य). — $^{c}$) $K_{4.5}$ $D_1$ महाबाहुं; $B_4$ (marg. as in text) महात्मानं (for महेष्वासं).

16 $M_1$ om. up to महेष्वा (cf. v. l. 14). — $^{a}$) $K_1$ यथा (for एष). $K_4$ महाराजः (for महेष्वासः). — $^{b}$) $D_8$ $T_4$ $G_{1.2}$ संवृतः; $G_4$ सुव्रतः (for संगतः). — $^{c}$) $K_1$ $B_6$ $D_{5.6}$ $T_{1.2.4}$ $G_{1-4}$ $M_{1-4}$ सहाभ्येति; $D_{3.9}$ सम° (for सदा°). — $^{d}$) $K_1$ पिता राजंस्तवांतिकं; $K_2$ पितामह तवांतिकं; $K_3$ $D_{3.9}$ -पिता तात ($D_9$ तव) तवांतिकं.

17 $^{b}$) $D_6$ $T_{2.4}$ $G_{2.5}$ $M_{2-4}$ नृपं; $D_8$ भीष्म-; $M_5$ भीमं (for भीष्मं). $K_{2.5}$ $D_{5.6.9}$ $T_{2.4}$ $G_{2-5}$ $M_{1-3.5}$ नृप (for नृपम्). — $^{c}$) $K_5$ द्रोण- (for द्रोणं). $B_5$ सार्धं (for पार्श्वे). — $^{d}$) K $B_2$ $D_8$ गुरुमेतं; $D_{5.6}$ $T_4$ $G_2$ गुरुं पुत्र; $T_2$ $G_{1.5}$ M गुरुपुत्रं; $G_3$ गुरुः पुत्र; $G_4$ गुरुं पश्य (for गुरुमेनं). $T_1$ स्थितं नृप निरामयं.

18 $^{a}$) $K_{4.5}$ $D_1$ च बहवो; $D_7$ महीपाल (for °पाला). — $^{b}$) $G_1$ $M_{1.3}$ यौधास्. — $^{c}$) $K_1$ गांधर्वैः; $K_2$ Dn $D_{2-4}$ $T_3$ गंधर्व- (for °र्वैः). — $^{d}$) $B_5$ Dn $D_{2-5.7}$ $T_3$ यक्ष- (for यक्षैः). $K_4$ तदा (for तथा).

19 $^{a}$) $T_1$ गतिश् (for गतिं). $B_1$ चैव (for चापि). — $^{b}$) $K_4$ प्रापुर् (for प्राप्ता). $K_{1.2}$ $D_5$ $G_3$ $M_{1.3}$ नृपोत्तमाः ($K_{1.2}$ °म); $K_{4.5}$ $B_{1-4}$ $D_1$ नरोत्तमाः; $B_{5.6}$ Dn $D_{2-4.7}$ $T_3$ नराधिपाः; $G_4$ नृपसमाः (for नृसत्तमाः). — $^{c}$) $T_{2.4}$ $G_{1.2.4}$ त्यक्तदेहा; $G_{3.5}$ $M_{1.2.4.5}$ त्यक्त्वा देहान् (for त्यक्त्वा देहं). $K_{1.2.4.5}$ $B_{2.5}$ $Dn_1$ $D_{1-4}$ $T_1$ जितः स्वर्गः; $K_3$ $D_8$ गताः स्वर्गं; $B_{1.3}$ जिताः स्वर्गाः; $D_9$ नृपस्वर्गः (sic) (for जितस्वर्गाः). $D_6$ त्यक्तदेहकृतस्वर्गाः; $T_3$ त्यक्त्वा देहाञ्जितः स्वर्गः. — $^{d}$) $B_2$ पुण्यवान् (for °वाग्). $K_{1.3}$ $D_{4.9}$ -कर्मणः ($D_9$ °णा); $D_5$ $T_{1.2.4}$ $G_{2.4}$ $M_5$ -सत्तमाः; $G_5$ $M_{1-4}$ -संमताः (for -कर्मभिः). $D_6$ $G_1$ पुण्यवाक्सिद्धिसत्तमाः; $D_8$ °वाग्बुधिकर्मिणः; $G_3$ °भाग्बुद्धिसत्तमाः.

Colophon. — *Adhy. name:* $K_1$ इंद्रवाक्यं; $K_2$ धर्मवाक्यं. — *Adhy. no.* (figures, words or both): $K_{3.4.5}$ $B_6$ $Dn_1$ $D_{3-6.9}$ S 4 (as in text). — *Śloka no.:* $K_5$ $Dn_2$ $D_9$ 23.

# ५

3. 146
8. 5. 1
5. 1

जनमेजय उवाच ।
भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः ।
विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा ॥ १
धृष्टकेतुर्जयत्सेनो राजा चैव स सत्यजित् ।
दुर्योधनसुताश्चैव शकुनिश्चैव सौबलः ॥ २
कर्णपुत्राश्च विक्रान्ता राजा चैव जयद्रथः ।
घटोत्कचादयश्चैव ये चान्ये नानुकीर्तिताः ॥ ३
ये चान्ये कीर्तितास्तत्र राजानो दीप्तमूर्तयः ।
स्वर्गे कालं कियन्तं ते तस्थुस्तदपि शंस मे ॥ ४
आहोस्विच्छाश्वतं स्थानं तेषां तत्र द्विजोत्तम ।
अन्ते वा कर्मणः कां ते गतिं प्राप्ता नरर्षभाः ।
एतदिच्छाम्यहं श्रोतुं प्रोच्यमानं त्वया द्विज ॥ ५
सूत उवाच ।
इत्युक्तः स तु विप्रर्षिरनुज्ञातो महात्मना ।
व्यासेन तस्य नृपतेराख्यातुमुपचक्रमे ॥ ६
वैशंपायन उवाच ।
गन्तव्यं कर्मणामन्ते सर्वेण मनुजाधिप ।
शृणु गुह्यमिदं राजन्देवानां भरतर्षभ ।

## 5

1 $K_1$ om. $1^{cd}$. — $^{c}$) $D_{5.6}$ $T_{2.4}$ $G_{1-3.5}$ M वीरौ; $D_9$ $T_3$ $G_4$ चैव (for चोभौ). — $^{d}$) $K_2$ transp. उत्तरः and तथा.

2 $^{a}$) $D_6$ धृतकेतुर् (for धृष्ट°). $K_5$ ययत्सेनो (for जय°). — $K_3$ $D_{8.9}$ om. (hapl.) $2^{b}$–$3^{a}$. — $^{b}$) $T_1$ सपत्नजित्; $G_1$ स सात्यकिः (for स सत्यजित्). $K_5$ राजा वै सत्यजित्तथा. — $^{c}$) $K_1$ $B_3$ $G_5$ $M_{2.4.5}$ -सुतश्; $K_{4.5}$ $G_3$ -मुखाश् (for -सुताश्). $K_{1.2}$ चापि (for चैव). $D_6$ $T_{2.4}$ $G_{1.2.4}$ दुर्योधनश्च कर्णश्च. — $^{d}$) $K_{2.5}$ $B_1$ $T_3$ चापि (for चैव).

3 $K_3$ $D_{8.9}$ om. $3^{a}$ (cf. v. l. 2). — $^{a}$) $K_1$ $D_5$ $T_1$ $G_{3.4}$ कर्णपुत्रश्च विक्रांतो. — $^{b}$) $T_1$ सत्यजिच्च (for राजा चैव).

4 $^{a}$) $K_3$ $D_{8.9}$ [ए]ते; $T_3$ [अ]पि (for [अ]न्ये). $K_{4.5}$ $D_1$ राजन्; $B_1$ विप्र; $B_{2-6}$ Dn $D_{2-4}$ $T_3$ वीरा (for तत्र). $K_{1.2}$ $D_{5.6}$ $T_{1.3.4}$ G M एते वै ($K_{1.2}$ ये चैते; $D_5$ ये ते वै) कीर्तिता विप्र ($D_6$ $T_4$ $G_2$ °प्रा). — $^{b}$) $G_5$ $M_{2.3}$ दिव्य- (for दीप्त-). — $^{c}$) $K_{1.2}$ सर्वे (for स्वर्गे). $K_{4.5}$ कियंतस्; $D_6$ कियंतैश्; $D_9$ कियत्तु (for कियन्तं). $D_6$ $T_{2.4}$ $G_{1.2.4}$ च (for ते). — $D_8$ om. (? hapl.) $4^{d}$–$5^{a}$. — $^{d}$) $D_8$ तस्थौ (sic). $D_5$ $T_{2.4}$ $G_{2.5}$ M तच्चापि; $G_1$ तं चापि; $G_4$ ते चापि (for तदपि). $K_4$ $D_1$ संगताः (for शंस मे). $K_5$ तस्थुस्तत्रापि सगताः; $T_1$ स्थितास्तानपि शंस मे.

5 $D_6$ om. $5^{a}$ (cf. v. l. 4). $K_1$ om. $5^{ab}$. — $K_{2-5}$ B $Dn_1$ $D_2$ (before corr.).$_{3-5.9}$ $T_3$ $G_2$ अ स्वित्. $K_3$ $D_{8.9}$ तेषां (for स्थानं). $T_1$ तेषां स्वेच्छानि स्थानं; $G_4$ अहो स्वैव स्वकं स्थानं. — $^{b}$) $K_3$ D स्थानं चैव; $D_6$ स्थानं नैषां; $T_1$ आसीत्तत्र; $T_3$ $G_{1.4}$ नै तत्र (for तेषां तत्र). — $^{c}$) $K_{1.3.4.5}$ B Dn $D_{2-4.7}$ $T_3$ $M_4$ कर्मणां (for °णः). $G_3$ काले; $G_4$ $M_5$ किं (for कां ते). — $^{d}$) $K_{3.5}$ नरर्षभ (for नरर्षभाः) — $^{e}$) $G_1$ transp. श्रोतुम् and एतद्. $K_3$ $D_{5.6.8.}$ $T_{1.2.4}$ $G_{2-5}$ M भगवन्; $K_5$ ह श्रोतुं (for [अ]हं श्रोतुं) — $^{d}$) $K_{1.3}$ त्वयानघ; Dn $D_{2-4.7}$ $T_3$ द्विजोत्तम; D $T_4$ $G_2$ मया द्विज (for त्वया द्विज). — *After* 5, N (*except* $D_{5.6}$) $T_3$ *ins.*:

20* तपसा हि प्रदीप्तेन सर्वं त्वमनुपश्यसि ।
[ $K_5$ सर्वं तु स न पश्यति (*for the post. half*). ]

6 $K_{1.2}$ $D_9$ $G_4$ $M_5$ om. 6. $K_{3-5}$ B D (excep $D_{5.6}$; $D_9$ om.) $T_3$ सौतिर् (for सूत). — $^{a}$) $K_{3.4}$ $B_{2.4}$ $D_{1.8}$ ब्रह्मर्षिर्; $K_5$ राज° (for विप्र°). — $^{c}$) $G_4$ व्यासेन सत्यनृपतिम् (*sic*). — $^{d}$) $K_{3.4}$ व्याख्यातुम् (*for* आ°).

7 $D_5$ $T_1$ $G_3$ om. $7^{ab}$. — $^{a}$) $K_{1.2}$ कर्तव्यं; $B_{1.3.5}$ Dn $D_{2-4.7}$ न शक्यं (for गन्तव्यं). — $^{b}$) $K_{1.2}$ पूर्वेण; $D_6$ $T_{2-4}$ $G_{1.2.4.5}$ M सर्वेषां (for °ण). — After $7^{ab}$, N (except $D_{5.6}$) ins.:

21* प्रकृतिं किं नु सम्यक्ते पृच्छैषा संप्रयोजिता ।
[ $D_9$ प्रकृतिः (for °तिं). $K_{3-5}$ $B_{1-3}$ $D_7$ तु (for नु).

यदुवाच महातेजा दिव्यचक्षुः प्रतापवान् ॥ ७
मुनिः पुराणः कौरव्य पाराशर्यो महाव्रतः ।
अगाधबुद्धिः सर्वज्ञो गतिज्ञः सर्वकर्मणाम् ॥ ८
वसूनेव महातेजा भीष्मः प्राप महाद्युतिः ।
अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ॥ ९
बृहस्पतिं विवेशाथ द्रोणो ह्याङ्गिरसां वरम् ।
कृतवर्मा तु हार्दिक्यः प्रविवेश मरुद्गणम् ॥ १०
सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम् ।
धृतराष्ट्रो धनेशस्य लोकान्प्राप दुरासदान् ॥ ११
धृतराष्ट्रेण सहिता गान्धारी च यशस्विनी ।
पत्नीभ्यां सहितः पाण्डुर्महेन्द्रसदनं ययौ ॥ १२
विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः ।
निशठाक्रूरसाम्बाश्च भानुः कम्पो विडूरथः ॥ १३
भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः ।
उग्रसेनस्तथा कंसो वसुदेवश्च वीर्यवान् ॥ १४
उत्तरश्च सह भ्रात्रा शङ्खेन नरपुंगवः ।

D9 सन्यक्तैः (for सम्यक्ते). K1.2 B8 प्रकुर्नि चातुम( B6 चापि म )न्यंते (for the prior half). K9 संप्रयोजता; D9 °योजिना.]

— c) K8 इमं (for इदं). K4.5 D1 महाभाग (for इदं राजन्). — d) M1 देवानां पुण्यसंचयं. — D5 om. 7ef. — e) K2 यत्रोवाच; K4.5 D1 यदवोचन् (for यदुवाच). T3 महायोगी (for °तेजा). D6 त्रैलोक्यदर्शीत्याख्यातो; T2.4 G1.2.5 M1–4 त्रैलोक्यदर्शी योगी च; G4 त्रैलोक्ययोगी दर्शी च.

8 a) K5 पुराणं (for °णः). — b) K4 D8 महाव्रत; B6 °मनाः; T4 G2.4 °नृप (for °व्रतः). D9 परासत्रौ (sic) महाद्युतिः. — c) K1.5 -बुद्धि- (for -बुद्धिः). — After 8, K3–5 D1.4.8 ins.:

22* तेनोक्तं कर्मणामन्ते प्रविशन्ति स्विकां तनुम् ।

[ D8 तेनोक्तं कर्मणायं ते (for the prior half). K4 D8 स्वकां (for स्विकां).]

9 a) K5 वसूनां च; B8 °नैव; T2 °न्देव; T3 °निव (for °नेव). — b) D4 वापि; G3 प्राप्य (for प्राप). K2 D8 महामतिः; K3 महायशाः; D8 °रथः (for °द्युतिः). — K1.2 om. 9cd. — c) K5 D1 (marg. as in text).7 अत एव (for अष्टावेव). — d) G4 वसवो जनमेजय.

10 b) K5 तु; D9 [s]पि (for हि). D4 आंगिरसां. K2 D6 T2.4 G2.5 M3 वरः. K1 द्रोणोप्यंगिरसां वरः (sic); D5 T1 G1.3.4 M1.2 द्रोणोप्यंगिरसां वरः. — c) B6 कृतकर्मा (for °वर्मा). D5.6 T1.2.4 G1–4 M1.5 च; G5 M2–4 स (for तु). — d) K4.5 B Dn D1–4.6.7 T3 G3 मरुद्गणान् (for °द्गणं). D9 प्रविवे * * सद्गणं.

11 a) B5 om.; D2.8 सनत्कुमारान् ( D8 °रात्). — b) K4.5 D1 सतां गतिं; B4.6 Dn D2.4.7 वा (for यथा°). — c) K1.2 जनेशस्तु; M1 सनशस्य (sic) (for धनेशस्य). — d) K5 G3 प्राप्य (for प्राप). D8.9 दुराधरान्; G4 यदा तदा (for दुरासदान्). K1.2 लोकान्प्राप्तो दुरावरान्.

12 K5 om. 12ab. — a) D7 हि तदा (for सहिता). — c) K5 पांडुं (for पाण्डुर्). — d) K5 G4 -सद्दशं (for -सदनं). G4 ययुः.

13 a) G4 -द्रुपदश्च (for °द्रौ). D8.9 चैव (for चोभौ). — b) D9 धृष्टद्युम्नश्च (for °केतुश्च). K2 पार्थिव. — c) K8 निशळाक्रूर-; K5 निशरो°; Dn1 M8 निशठो°; D4 निःशठा°; D8 निशटक्रूर- (for निशठा°). B2 D2 -शांबाश्च; B5 -शांवश्च; D9 -सां * *; T3 -सांवश्च (for -साम्बाश्च). K1 निशाठाक्रूररह्याश्च; K2 निशटाक्करसस्वाश्च (sic); B3.4.6 निशठोक्रूरः शां( B8 °रशां )ब( B3 °बा )श्च; Dn2 निशठोक्रूरसांबश्च; G4 शरीरक्रूरसांबश्च. — d) K3 D9 भासः; K5 G4 भानु-; B5 om. (for भानुः). K3–5 B2–6 D1.8.9 कंको; D4.6 T1.2.4 G1.2.4.5 M1.2.5 कण्वो; G3 कण्व-; M8 कंबो (for कम्पो. K3.4 B Dn D1–5.7–9 T1 विदुरथः (for विडू°). K1 सानकंको विभारथः; K2 सान्वः कंको विधुरथः.

14 a) K1.5 M1 भूरिश्रवा (for °वाः). K2 चलश्च; K5 शलाश्च; B6 D9 सलश्च; M1 * लश्च (for शलश्च). G3 शल्यो (for चैव). — b) K1.2 शल्यश्च; K4.5 D1 पूरुश्च (for भूरिश्च). K3 D8 भूरिश्च पृथिवीपते. — c) G5 M2 तदा (for तथा). D5.6 T1.2.4 G M राजा (for कंसो). K1.2.4 B Dn D1–4.7 T3 कंसश्चैवो- ( T3 °श्चैपो )ग्रसेनश्च; K5 कंसश्चोग्रसेनश्च. — d) N (except K3 D5.6) T3 तथैव च (for च वीर्यवान्).

15 a) G3 उत्तरेण (for. उत्तरश्च). — b) G4 शंखश्च

B3 concludes with :

स्वर्गारोहणिकं पर्व समाप्तम् ॥ शुभमस्तु । शकाब्दाः १६६० । श्रीहरये नमः । श्रीरामाय नमः । श्रीरामाय नमः । गोविन्दाय नमः । ॐ श्रीकृष्णाय नमः । श्रीगोपालाय नमः ॥ श्रीराम ।

B4 concludes with :

स्वर्गारोहणिकं पर्व समाप्तम् ॥ श्रीहरिर्जयति । श्रीगुरुर्जयति । श्रीकृष्णाः । अस्यानन्तरं हरि । आश्चर्यपर्व भविष्यति । तस्याद्यमाद्यश्लोकः ।

जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ।
यस्यास्यकमलगलितं वाङ्मयममृतं जगत्पिबति ॥

B5 concludes with :

स्वर्गारोहणिकं समाप्तम् । श्रीश्रीगुरवे नमः । श्रीश्रीवासुदेवाय नमः । श्रीश्रीशुकदेवाय नमः । श्रीश्रीकृष्णाय नमः ॥ श्रीश्रीशौनकादिभ्यो ऋषिभ्यो नमः ।

B6 concludes with :

स्वर्गारोहणिकं समाप्तम् ॥ हरये नमः ॥

D1 concludes with :

स्वर्गारोहणं समाप्तम् । शुभमस्तु । Adds on the marg. अतः परं हरिवंशं ।

D2 concludes with :

स्वर्गारोहणपर्व समाप्तं । शुभमस्तु ॥ संवत् १६६६ समये अश्विन-शुदि पञ्चमि । लिखितं रघुनाथेन ।

D3 concludes with :

स्वर्गारोहणपर्व समाप्तं ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीरामार्पणमस्तु ॥ साम्बसदाशिवार्पणमस्तु ॥ सर्वं ब्रह्मार्पणमस्तु ॥

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
अबद्धं वा सुबद्धं वा मम दोषो न दीयते ॥

तथापि —

करकृतमपराधं क्षन्तुमर्हन्तु सन्तः ।

श्रीमहाभारतं समाप्तम् ॥

D4 concludes with :

स्वर्गारोहणपर्व समाप्तम् ।

भारतस्य समुद्रस्य मेरोर्नारायणस्य च ।
अप्रमेयाणि चत्वारि पुण्यतोयगुणागुणाः ॥

श्रीरस्तु समस्तमङ्गलानि भवन्तु ।

D5 concludes with :

श्रीकृष्णार्पणमस्तु । स्वर्गारोहणपर्वं समाप्तं ॥ इदं स्वर्गारोहणपर्व राजश्री मोरोपंडितस्य विश्वनाथभट्टस्वहस्तलिखितं ॥

D6 concludes with :

समाप्ते पर्वणि तथा स्वर्गारोहणिके नृप ।
संपूज्य वाचकं वस्त्रैर्भोजनं सार्वकामिकम् ॥

श्रीरस्तु ॥ श्रीरस्तु ॥ श्रीः ॥

D7 concludes with :

स्वर्गारोहिणकं पर्व समाप्तम् ॥ शुभमस्तु ॥ श्रीरामचन्द्राय नमः ॥ श्रीनृसिंहाय नमः ॥ श्रीअरुणाचलब्रह्मणे नमः ॥

D8 concludes with :

स्वर्गारोहणं पर्व समाप्तं । वृत्तान्ता अस्मिन्पर्वणि । युधिष्ठिरस्वर्गागमनं ॥ दुर्योधनदर्शनं ॥ युधिष्ठिरवैवर्ण्यं ॥ युधिष्ठिरानुनयः ॥ भ्रातॄणां लोकप्राप्तिपृच्छा ॥ लोकदर्शनोत्कण्ठा । देवदूताप्तिः ॥ ततो मायानरकदर्शनं ॥ बंधुप्रलापश्रवणं ॥ युधिष्ठिरदौर्मनस्यं ॥ देवताविवादः ॥ युधिष्ठिरगङ्गादर्शनं ॥ ततः कुरुदर्शनं ॥ आकाशगङ्गास्नानं ॥ देहत्यागः ॥

भाति सर्वेषु वेदेषु रतिः सर्वेषु जन्तुषु ।
तरणं सर्वपापानां तेन भारतमुच्यते ॥
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे सुबहुश्रुताय ।
पुण्यां च भारतकथामपि यः शृणोति
तुल्यं फलं भवति तस्य च तस्य चैव ॥ (= 58*)
पाराशर्यवचःसरोजममलं गीतार्थगन्धोत्कटं
नानाख्यातककेसरं हरीकथासबंधो नः बोधितं (sic) ।
श्रोत्रा सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि वः श्रेयसे ॥ (=59*)
यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयताम् ॥

D9 concludes with :

युधिष्ठिरस्वर्गारोहणं समाप्तं ॥ कल्याणमस्तु ॥ श्रीरस्तु ॥

T1 concludes with :

श्रीरामब्रह्मणे नमः । श्रीवासुदेवब्रह्मणे नमः । श्रीवेदव्यासाय नमः ।

कृष्णं परात्परं वन्दे जगद्योनिं जगत्पतिम् ।
सर्वदेवोत्तमश्रीशं सर्वकामफलप्रदम् ॥

T2 concludes with :

श्रीकृष्णाय नमः । स्वर्गारोहणपर्व समाप्तम् ॥

T3 concludes with :

श्रीसीतारामार्पणमस्तु । स्वर्गारोहणपर्वं समाप्तम् । आंगिरसनाम संवत्सरे भाद्रपद शुद्ध ३ अंगारवारं न प्रतिनुवक्रमांनतु मंत्रिप्रगडसुब्बय्यगारि स्वर्गारोहणपर्वं संपूर्णम् गामाशियिचेनु ॥ ( अंगारवारे ग्रन्थदष्टक्रमेण मंत्रिप्रगडसुब्बय्यनामा स्वर्गारोहणपर्वं संपूर्णतया लिखितवान् इत्यर्थः ) । श्रीकृष्णार्पणमस्तु ।

T4 concludes with :

समाप्ते पर्वणि तथा स्वर्गारोहणिके नृप ।
संपूज्य वाचकं वस्त्रैर्भोजनं सर्वकामिकम् ॥

इति स्वर्गारोहणिकपर्वं समाप्तं । इति श्रीमहाभारतं समाप्तं । रुक्मिणीसत्यभामासमेतश्रीराजगोपालाय नमः ।

G1 concludes with :

हरिः ॐ । स्वर्गारोहणं समाप्तं । श्रीमते रामानुजाय नमः ।

G2 concludes with :

समाप्ते पर्वणि तथा स्वर्गारोहणिके नृप ।
संपूज्य वाचकं वस्त्रैर्भोजनं सार्वकामिकम् ॥

इति स्वर्गारोहिणिकं समाप्तम् । हरिः ॐ । शुभमस्तु । श्रीगुरुभ्यो नमः । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । हरिः ॐ । २९ कृत्वः श्रीः इति लिखितम् ॥

G3 concludes with :

स्वर्गारोहणपर्वसमाप्तिर्जाता ।

G4 concludes with :

श्रीकृष्णाय परब्रह्मणे नमः । स्वर्गारोहणं समाप्तम् । हरिः ॐ । श्रीमन्निगमान्तमहादेशिकाय नमः । अस्मद्गुरुपरम्पराभ्यो नमः ।

G5 concludes with :

यः श्रावयेदं (sic) निखिलं महार्थं देवालये ब्राह्मणसंनिधौ वा ।
संपूजनीयोचितमर्थसंचयैर्धर्मान्तराकल्पशतैरनेकधा ॥

श्रीकृष्णः शरणं मम । ॐ । हरिः ॐ । स्वर्गारोहितिकं (sic) पर्व संपूर्णं । ॐ । ॐ तत्सत् । ॐ ॐ ॐ ॐ

कायेन वाचा मनसेन्द्रियैर्वा ।
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै ।
नारायणायेति समर्पयामि ॥

** कृत्वः ॐ इति च लिखितः । ततः सीतारामाभ्यां नमः । ॐ तत्सत् । संभवं । सभा । अरण्यं । विराटं । उद्योगं । भीष्मं । द्रोणं । कर्णं । शल्यं । सौप्तिकैषीकं । स्त्री । शान्ति । आनुशासनिकं । आश्वमेधिकं । आश्रमं । मौसलं । महाप्रस्थानिकं । स्वर्गारोहिणकं । इत्येतान्यष्टादश पर्वाणि । ॐ तत्सत् । ततः ८ कृत्वः ॐ इति लिखितः ॥

M1 damaged.

M2 concludes with :

स्वर्गारोहिणकं समाप्तम् ।

यज्जन्मनः प्रभृति मोहपराजितेन
नानापराधशतमाचरितं मया ते ।
अन्तर्बहिश्च सकलं तव पश्यतो हि
क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥
कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ।

मपच्चेरियुटे ग्रंथं (मपच्चेरि इति कस्यचित्कुलनाम तत् पुस्तकमित्यर्थः ।)

M3 concludes with :

स्वर्गारोहणं समाप्तं । श्रीवेदव्यासाय नमः । श्रीकृष्णाय नमः शुभमस्तु ॥

अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद्भवेत् ।
क्षन्तुमर्हन्ति विद्वांसः कस्य नास्ति व्यतिक्रमः ॥

कुञ्जिकृष्णं कय्यलुत्ते ।

M4 concludes with :

स्वर्गारोहणिकं समाप्तं ।

बिन्दुरुल्लिपिविविचित्रवीचिकाभङ्गभङ्गिपदहीनहूणणम् (sic) ।
हस्तवेगजमबुद्धिपूर्वकं क्षन्तुमर्हति समीक्ष्य सज्जनः ॥
अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद्भवेत् ।
क्षन्तुमर्हन्ति विद्वांसः कस्य नास्ति व्यतिक्रमः ॥

गुरुभ्यो नमः । श्रीगुरवे शरणं । वैश्वदेवार्थं पृथक्पाक कृतेऽपि पितृपाकशेषादेव भोजनं । प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् इति याज्ञवल्क्यस्मरणात् । अभोजने दोषमाह देवलः ।

श्राद्धं कृत्वा तु यो विप्रो न भुंक्ते* कदाचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथेति ॥

एतच्च पितृसेवितं भोजनं सर्वविश्वापितृसेवितादुपादाय कर्तव्यं । तथा च मत्स्यः ।

ततश्च वैश्वदेवान्ते संभृत्य सुतबान्धवः[वम्] ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषे ** ॥

M5 concludes with :

श्रीमहाभारतं समाप्तम् । श्रीवेदव्यासाय नमः ।
लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥
श्रीवेदव्यासाय नमः । श्रीगुरुभ्यो नमः ॥

# APPENDIX I

☞ This Appendix gives the additional passages found in certain MSS. which were too long for being included in the footnotes to the constituted text. Minor variants and obvious scribal errors in these Appendix passages are silently corrected, where possible.

## 1

After 41*, G2 ins.:

भारतस्य तु वक्तारं ब्रह्मर्षिश्च महागुरुः ।
वैशंपायनमारोप्य स्वर्णभद्रासनं तदा ।
जनमेजयाद्या राजान आस्तिकाद्या द्विजातयः ।
धर्मदत्तादिवैश्याश्च सोम्यवंश्यादिशूद्रकाः ।
प्रयुतं चायुतं चेति सहस्रं शतमित्यपि ।
दशकं चेति निष्काणामानर्चुस्तं महागुरुम् ।
निष्काणां दशकं दत्त्वा मृतपुत्रोऽमृतप्रजः ।
कुष्ठादिव्याधियुक्तश्च शतं दत्त्वा निरामयः ।
सहस्रदानात्संतानहीनः संतानपुत्रवान् ।
आयुरारोग्यमैश्वर्यं भेजुस्तेऽन्ते च पुत्रकान् ।
अयुतस्य तु दानेन प्रयुतस्य तु दानतः ।
जीवैश्वरैक्यविज्ञाने महावाक्योद्भवे तदा ।
चतुर्ष्वपि च वेदेषु सारवत्कथिते दृढा ।
बुद्धिरासीच्च तस्यैव पूजया च मुनेस्तदा ।
सुवर्णं रजतं रत्नं सर्वाण्याभरणानि च ।
सर्वोपकरणैर्युक्तं निधिनिक्षेपसंयुतम् ।
इष्टकाभित्तिसंयुक्तमग्निबाधादिवर्जितम् ।
देवपूजाग्निहोत्रादिपाठार्थगृहसंयुतम् ।
सान्तर्बहिःसंवरणं सप्रसादं सगोगृहम् ।
व्यष्ट्या समष्ट्या वा दद्यात्स्वर्गारोहणपर्वणि ।
निवृत्तिकामेनथकि (sic) पुनर्जन्म न विद्यते ।
सकामश्चेद्ब्रह्मकल्पं सुखं ब्रह्मगृहे वसेत् ।
पुराणमुखतो यस्माद्वेदान्तज्ञानमाप्यते ।
सद्वे न (sic) गुरुराख्यातस्तत्पूजा हीशपूजनम् ।
भारतस्य तु वक्तारं श्रोतारं लेखकांस्तथा ।
प्रपूजयन्ति संहृष्टाः सिद्धाश्च परमर्षयः ।
महाभारतवक्तारं नार्चयन्तीह ये नराः ।
तेषां सर्वक्रियाहानिर्भवेद्देवाः शपन्ति च ।

## 2

After 52*, G3 ins.:

इतिहासमिमं पुण्यं ये शृण्वन्ति नरोत्तमाः ।
तेषां वासाय निर्दिष्टाः स्वर्गलोकाः सनातनाः ।
लिख्यते येन सततं महाभारतमादितः ।
स सर्वज्ञः स वाग्मी च स्वर्गभाक्च न संशयः ।
*वरदमितिहासं ये पठन्तीह भक्त्या
सकलसुरवरिष्ठैः पूज्यमाना भवन्ति ।
मुनिवरकृतमेतद्भारताख्यं सुपूज्यं
पुनरपि सुरलोकान्न च्यवन्ते मुनीन्द्राः ।
एतद्भारतवक्तॄणां श्रोतॄणां चैव सर्वदा ।
भवेत्प्रसन्नो भगवान्मङ्गलं च पुनः पुनः ।
एतद्भारतमाकर्ण्य नैमिशे[ ये ]या महर्षयः ।
शौनकाद्यास्तदा सर्वे प्रहृष्टमनसोऽभवन् ।
तत्रत्या ब्राह्मणाः सर्वे सूतं पौराणिकोत्तमम् ।
पूजयामासुरत्यन्तं भाषणाश्लेषणादिभिः ।
ततः प्रदक्षिणीकृत्य मुनिमण्डलमादरात् ।
स्वस्ति गोब्राह्मणेभ्योऽस्तु द्विजानां पुरतोऽवदन् ।
यज्ञकर्मान्तरे त्वेतच्छ्रुत्वा भारतमादितः ।
सम्यगुक्तं सम्यगुक्तमित्यूचुस्ते महर्षयः ।
श्रुत्वा त्विदं भारतमेतदग्र्यं
यज्ञस्य मध्ये द्विजपुंगवास्ते ।
तं पूज्य विप्रं विधिवत्समाप्य
स्वं स्वं गृहांश्च प्रययुः प्रहृष्टाः ।

## 3

K3 ins. after 18. 5. 53 : D3 after 35* :

त्रिभिर्वर्षैर्धर्मकामः कृष्णद्वैपायनो मुनिः ।

चकार पावनं विप्रा इतिहासं विमुक्तिदम् ।
भारतस्य पदैकेन गङ्गाया दर्शनेन च ।
विष्णोः स्मरणमात्रेण सर्वपापैः प्रमुच्यते ।
अश्वमेधसहस्रेण वाजपेयशतेन च ।
पाकसंस्थादितः संस्थाः सोमसंस्थाश्च कुर्वताम् ।
तत्फलं कोटिगुणितं भारतश्रवणे भवेत् ।
भुङ्क्ते विप्रायुते चैव यश्च गच्छेत्सरस्वतीम् ।
लक्षैरष्टादशैर्देव्या जपहोमशतैस्तथा ।
वेदस्यान्तं च पठतां तत्पुण्यं भारतश्रवात् ।
तेन दत्तानि दानानि तेन तप्तं महत्तपः ।
तेन वै लक्षधा जप्तं कृतं तीर्थावगाहनम् ।
श्रुतं तु भारतं येन कृतकृत्येन धीमता ।
आदिमध्यावसानेन श्रद्दधानेन वै तथा ।
गोभूहिरण्यदानानि तेन दत्तानि नित्यशः ।
धेनूनां शतदानानि पर्वतानां तथैव च ।
लोकदानं तथा दत्तं ब्रह्माण्डस्य च संततिः ।
कृता दत्तं भवेत्तेन श्रुतं येनैतदुत्तमम् ।
श्रुत्वा जयं चेतिहासं द्विजाय
शुश्रूषवे सानुभक्त्या च दद्यात् ।
शुभातपत्रं भूमिगोकाञ्चनानि
गृहाणि वस्त्राणि शुभां सरस्वतीम् ।
त्रिपूरुपेण विदितस्त्रिपु शुक्लस्तथा द्विजः ।
साधुः सदाचाररतस्तस्माद्धि शृणुयाज्जयम् ।
विष्णुर्ह्यर्यं यस्य देहे वसेद्भारत भारती ।
नाविष्णुश्च पठेदेतन्नाविष्णुः शृणुयादपि ।
श्रुतिस्मृतिपुराणानि जयमङ्गलभारती ।
सत्कुलादेव शृणुयान्न हीनाच्च कुलात्कचित् ।
तस्मात्सदाचाररतात्सत्कुलीनाद्बहुश्रुतात् ।
शृणुयाद्भारतं नित्यं वंशद्वयपरीक्षितात् ।
अस्य शास्त्रस्य कवयो न समर्था विशेषणे ।
साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः ।
उपदेष्टा भवेद्विष्णुः श्रोता चैव श्रुतं तथा ।
अपि पातकिनं तस्मात्पुनात्येष श्रुतो जयः ।
महापापानि पापानि जातिभ्रंशकराणि च ।
मालिन्यसंकराण्यत्र कारणानि तु यानि तु ।
तानि संशोधयेदेनत्कृत्स्नं शृण्वन्हि भारतम् ।
सर्वमङ्गललाभश्च सर्वसंपत्समागमः ।
पुत्रलाभो मित्रलाभः कामलाभस्तथैव च ।
राज्यलाभः पशुलाभो महालाभस्तथैव च ।
जायते धर्मलाभश्च भारतं शृण्वतः सदा ।
सर्वदा मङ्गलं तेषां नास्ति तेषाममङ्गलम् ।
जयमङ्गलहोमाश्च शान्तयः पौष्टिकानि च ।
भारतश्रवणादेव सुशुभानि भवन्त्युत ।
येषां हृदि हृषीकेशः कण्ठे भारतमेव च ।
धन्यास्ते मानवा लोके कृतकृत्या न संशयः ।
न ह्येवाकृतपुण्यानां भारतं भवति प्रियम् ।
भारतं भवने येषां न ते शोच्याः कृताकृते ।
जयो नामेतिहासोऽयं श्रोतव्यो जयमिच्छता ।
विप्रेण राज्ञा वैश्येन शूद्रेण च यतात्मना ।
कुरुक्षेत्रे भवेद्दत्तं स्नातं स्नातं सुपुष्करे ।
तप्तं हिमाद्रौ कालेषु श्रुतं येनेह भारतम् ।
ज्ञातिश्रैष्ठ्यं कुलश्रैष्ठ्यं वर्णश्रैष्ठ्यं तथैव च ।
धर्ममङ्गललाभं च श्रुत्वैतत्प्राप्नुयान्नरः ।
भाति सर्वेषु वेदेषु रतिः सर्वत्र जन्तुषु ।
तरणं सर्वपापानां तेन भारतमुच्यते ।

---

No. 3

(L. 2) Ds त्रिभिर्दिनैः (for विमुक्तिदम्). — (L. 7) Ds -श्रवणं (for °णे). — (L. 8) Ds भुक्त (for भुङ्क्ते). — (L. 9) Ds देव्यां (for देव्या). — (L. 11) Ds तं न दत्तानि दानानि (for the prior half). — (L. 12) Ds corrupt. — (L. 18) Ds श्रुतं येनैव दत्तं (for the post. half). — (L. 20) D3 -भक्ता (for -भक्त्या). K8 om. च. — (L. 21) Ds भुवि (for भूमि-). — (L .23) Ds नृपुरुषेण (for त्रिपू°). Ds तस्माद्धि शृणुयात्क्षयं (for the post. half). — (L. 29) Ds -रतान् (for -रताद्). Ds सत्कुलीनान्बहुश्रुतान् (for the post. half). — (L. 30) Ds -निरीक्षितान् (for -परीक्षितात्). — (L. 33) Ds आश्रयाः (for °माः). — (L. 33) K8 भिक्षुः (for विष्णुः). — (L. 34) Ds यस्मात् (for न°). Ds कारकानि शुभानि तु (for the post. half). — Ds om. line 40. — Ds om. lines 49–56.

# CRITICAL NOTES

## on the Svargārohaṇa-parvan

☞ Purely exegetical Notes are given sparingly and only where necessary. A few corrections and additions required in the constituted text, as also in the Critical Apparatus given below the same, are in the following Notes, enclosed within square brackets.

## 1

6 [cd]) ❀ Cn: स्वर्गेऽप्यमर्षो दुस्त्यज इति संस्काराणां प्राबल्यमुक्तम् । ❀

20 [b]) वीरलोकाः । Cv explains: युद्धे आभिमुख्येन मृतानां वीराणां किंचित्कालं सुखभोगाय स्वर्गादर्वागन्तरिक्षादुपरि कृता ये लोकास्ते वीरलोकाः । — [d]) ❀ Cn: सुहृद्द्रुहः । सुहृद इत्यदन्तः शब्दः । ❀

24 [a]) धृष्टद्युम्न is the brother of द्रौपदी; he killed Droṇa (7. 165).

25 [d]) धृष्टकेतु, the son of शिशुपाल, who was killed by द्रोणाचार्य (7. 101. 22–37).

## 2

1 [d]) युधामन्यु and उत्तमौजस्, both पाञ्चाल्s and both killed by Aśvatthāman; The death of the first is mentioned in 10. 8. 35, and of the second in 10. 8. 33. Cf. Bh. Gītā i. 6[ab].

6ff. Compare 11. 27. 6ff. and 12. 1. 41.

17 [b]) For केशशैवलशाद्वलम्, Cv reads केशकङ्कालसंकुलम् and explains it thus: ❀ कङ्कालः शरीरास्थि । शरीरास्थिषु कङ्कालः पृष्ठास्थिनि कशेरुका इत्यमरः (2. 6. 69) । ❀

20 [a]) काकोल, explained by अमर (2. 5. 21) as द्रोणकाक (raven). — On the whole incident Cv observes: ❀ अश्वत्थामा हत इति वदेति (7. 164. 160) कृष्णवचनमविश्वस्य उपांशु कुञ्जरश्चेति कथनात् तत्कालोचितनरकदर्शनाय दैवैस्तदैव कल्पितो नरकः । "भ्रातॄन्द्रक्ष्यसि पुत्र त्वमग्रतस्त्रिदिवं गतान् । कृष्णयानुगतान्वीरान्मा शुचो भरतर्षभ" — इति महाप्रस्थानिके पर्वणि (17. 3. 5) प्रागुक्तशक्रवचनविरोधात् । भीमोऽहं कर्णोऽहमर्जुनोऽहमित्यादि वदन्तोऽपि जीवाः, धर्मराजस्य नरकयोग्यदुःखदानाय दैवैस्तदैव कल्पिताः । अन्यथा भूमेरधस्ताद्विद्यमानस्य नरकस्य कथं स्वर्गमार्गे दर्शनम् । "समागतेषु देवेषु व्यगमत्तत्तमो नृप" (18. 3. 3[cd]) इत्यादिवक्ष्यमाणवचनविरोधाच्च । ❀

21 [d]) ❀ Cn: प्रवेरितैः, इतस्ततः पातितैः । ❀

24 [a]) ❀ Cn: करम्भवालुकाः, श्वेतसूक्ष्मवालुकाः । भ्राष्ट्रवालुकाः । ❀ भ्राष्ट्र, i. e., very hot, as though placed on a frying pan (भ्राष्ट्र).

25 [a]) शाल्मलि, The 'seemul' or silk-cotton tree, which is a thorny tree with red flowers. The thorns are used for torturing.

## 3

14 [b]) ❀ Cn: हतः कुञ्जर इति अश्वत्थामवधे द्रोणः उपचीर्णः, वञ्चितः । गजवाची शब्दो मनुष्यपरत्वेन ज्ञापितः इत्युपचारच्छलेनेत्यर्थः । ❀ — Also Cv observes: यद्यपि 'अश्वत्थामा हतः', उपांशु 'कुञ्जरश्चेति' कथनाच्च व्याजोऽस्ति धर्मराजस्य, तथापि कृष्णवाक्ये व्याजत्वबुद्धिकरणमेव व्याजः ।

16 [a]) तुभ्यम् in the sense of तव, following the usual Epic practice: cf. 18. 2. 27[a], मह्यम्.

23 [b]) The v. l. असिकृद्धितान्, 'won by sword', as compared with the text अश्वमेधाभिनिर्जितान्, has not much support.

31 For the first परीक्षा, cf. 3. 227 (यक्षप्रश्न); the second is described in 17. 3; and the third is the present one in 18. 3. 31ff.

32 [b]) ❀ Cn: द्रौपद्या (तृतीयापाठे), द्रौपद्या सह सोदर्येषु विनष्टेषु सत्सु । पञ्चमीपाठे तामारभ्य इत्यर्थः ॥ ❀

35 [a]) The majority of MSS, influenced by the initial अवश्यं, read नरकं and द्रष्टव्यं in the neuter gender; अवश्यं is an adverb to be construed with द्रष्टव्यः.

Cv colophon: युधिष्ठिरमन्दाकिनीस्नानकथनम् ।

## 4

7 ❀ Cv: मरुल्लोकस्थभीमसेनसमीपे द्रौपदीदेहे पञ्चकन्यासहितत्वाद्भवती स्पर्शयोग्या । इदानीं केवलं भारतीरूपत्वाद्भीमस्यैव

स्प्रष्टुं योग्या, नान्यस्येति भावेनाह—ततोऽस्य भगवानिन्द्र इति । ❀

9 [a] ) श्रीरेषा— ❀ Cv : शं रूपे तु रते वायौ श्रीरित्येव च कीर्तिता । सैव च द्रौपदी नाम काली चन्द्रेति चोच्यते ॥ — इति वचनात् भारत्यपि श्रीरित्येव च कीर्तिता । 'सैव च द्रौपदी नाम काली चन्द्रेति चोच्यते' इति वचनात् भारत्यपि श्रीशब्दवाच्येति भावेनोक्तम् । ❀

## 5

1 Cn introduces the comm. with a philosophical issue : पूर्वस्मिन्नध्याये यो यो योधो यस्य यस्य देवस्यांशः स स्वर्गं गत्वा स्वस्य स्वस्यांशिनः सांनिध्यं प्रापेत्युक्तम् । तत्र संशयः । किमेते अंशाः, काण्डरुहाणां वृक्षाणामंशा इव पृथक्संसारित्वे प्राप्ताः, उत तेष्वेवांशिषु लीयन्ते । आद्ये कर्मजदेहपरंपरायास्तत्त्वज्ञानमन्तरेणोच्छेदायोगात्तेषां नित्यसंसारित्वमस्मदादिवत्स्यात् । द्वितीये मानुष्यभावे तैः कृतानां कर्मणां नाशापत्तिरिति संदिहानो जनमेजयः पृच्छति — भीष्मद्रोणौ महात्मानाविति (18. 5. 1)। ते अन्ते कां गतिं–पुण्यभोगान्ते अंशिना सह ऐक्यं वा सालोक्यं वा शाश्वतं–प्राप्नुवन्ति, उत भूमाववतरन्ति — इति प्रश्नः ( st. 5 ) । अत्रोत्तरं — न शक्यमिति ( st. 8 ) । — The reply is that the personalities of exceptional merit — like भीष्म — unite with the अंशिन् almost immediately. Others might take time: as Cn observes — इतरे स्वर्गं गता अपि पुनश्च्यवन्ते । उत्तरामुत्तरामूर्ध्वोर्ध्वक्रमेण गतिं प्राप्य अन्ते ब्रह्मणा सह मुच्यन्ते । Compare on the subject the Brahmasūtra-Śāmkarabhāṣya on III. iii. 32 ( also IV. iii. 11 ) —

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

7, 21* ❀ Cn : प्रकृतिं, 'प्रति गन्तुं' न शक्यमित्यध्याहृत्य योज्यम् । यदि सर्वोऽपि जन्तुः प्रारब्धकर्मान्ते स्वां प्रकृतिं गच्छेत्तर्हि सर्वेऽपि मुक्ताः स्युः, संसारश्चादिमान्भवेत् । ततश्च कृतहानाकृताभ्यागमप्रसङ्गो विधिप्रतिषेधशास्त्रानर्थक्यं च । तस्मात्केचिदेव कर्मणामन्ते स्वां प्रकृतिं भजन्ते, न सर्वे, इति । ❀

18 [c] ) शकुनि was the evil genius of दुर्योधन. Hence शकुनि is appropriately regarded as the अवतार of the third युग, which paved the pathway for the post-Mahābhārata कलियुग, in which we are living.

24 [d] ) ❀ Cv : पुरुषर्षभाः, पुरुषेषु ऋषभाः श्रेष्ठा उत्तमजीवा विराटद्रुपदभीष्मद्रोणाद्याः । अन्यथा—धृतराष्ट्रजाश्चैव ये प्राधान्या मदोत्कटाः । दुर्योधनसहायास्तु पार्थिवा ये न कीर्तिताः ॥ ते दानवान्गुह्यकांश्च गन्धर्वांश्च तथाविशन् । गुह्यकाः शङ्खचूडाद्या दुर्जीवा द्रमिडादयः ॥

26ff. The words of Sauti beginning with st. 5. 26 take the Mbh. to the third or the latest stage of the Mahābhārata-narration, and this naturally has several stanzas in common with adhyāyas 1. 1 and 2, and 1. 56, besides stray equations with stanzas from other parvans. These are shown in the Critical Apparatus to stanzas 34 onwards; including the relevant star-passages.

## CONCORDANCE OF THIS EDITION

with the Bombay, Calcutta, and Madras ( P. P. S. Sastri's ) Editions

| Crit. Ed. | Bom. Ed. | Cal. Ed. | Madras Ed. |
|---|---|---|---|
| 1* | not numbered | not numbered | — |
| 1. 1–2$^{ab}$ | 1. 1–2$^{ab}$ | 1–2$^{ab}$ | 1. 1–2$^{ab}$ |
| 2* | — | — | — |
| 1. 2$^{cd}$ | 1. 2$^{cd}$ | 2$^{cd}$ | 1. 2$^{cd}$ |
| 3* | — | — | — |
| 1. 3–10 | 1. 3–10 | 3–10 | 1. 3–10 |
| 1. 11$^{ab}$ | 1. 11$^{ab}$ | 11$^{ab}$ | 1. 10½ |
| 1. 11$^{cd}$ | 1. 11$^{cd}$ | 11$^{cd}$ | 1. 11 |
| 1. 12–22 | 1. 12–22 | 12–22 | 1. 12–22 |
| 1. 23$^{ab}$ | 1. 23$^{ab}$ | 23$^{ab}$ | 1. 22½ |
| 1. 23$^{cd}$–25$^{ab}$ | 1. 23$^{cd}$–25$^{ab}$ | 23$^{cd}$–25$^{ab}$ | 1. 23½, 24, 24½ |
| 4* | — | — | — |
| 1. 25$^{cd}$–26$^{ab}$ | 1. 25$^{cd}$–26$^{ab}$ | 25$^{cd}$–26$^{ab}$ | 1. 25½ |
| 1. 26$^{cd}$ | 1. 26$^{cd}$ | 26$^{cd}$ | 1. 26 |
| 2. 1–6 | 2. 1–6 | 27–32 | 2. 1–6 |
| 2. 7$^{ab}$ | 2. 7$^{ab}$ | 33$^{ab}$ | 2. 6½ |
| 2. 7$^{cd}$–8$^{ab}$ | 2. 7$^{cd}$–8$^{ab}$ | 33$^{cd}$–34$^{ab}$ | 2. 7½ |
| 2. 8$^{cd}$ | 2. 8$^{cd}$ | 34$^{cd}$ | 2. 8 |
| 2. 9–10 | 2. 9–10 | 35–36 | 2. 9–10 |
| 2. 11$^{ab}$ | 2. 11$^{ab}$ | 37$^{ab}$ | 2. 10½ |
| 2. 11$^{cd}$ | 2. 11$^{cd}$ | 37$^{cd}$ | 2. 11 |
| 2. 12 | 2. 12 | 38 | 2. 12 |
| 5* | — | — | — |
| 2. 13–22 | 2. 13–22 | 39–48 | 2. 13–22 |
| 2. 23$^{ab}$ | 2. 23$^{ab}$ | 49$^{ab}$ | — |
| 6* ( subst. 23$^{ab}$ ) | — | — | 2. 23$^{ab}$ |
| 2. 23$^{cd}$–25 | 2. 23$^{cd}$–25 | 49$^{cd}$–51 | 2. 23$^{cd}$–25 |
| 2. 26$^{ab}$ | 2. 26$^{ab}$ | 52$^{ab}$ | 2. 25½ |
| 2. 26$^{cd}$–27$^{ab}$ | 2. 26$^{cd}$–27$^{ab}$ | 52$^{cd}$–53$^{ab}$ | 2. 26½ |
| 2. 27$^{cd}$ | 2. 27$^{cd}$ | 53$^{cd}$ | 2. 27 |
| 2. 28–33$^{ab}$ | 2. 28–33$^{ab}$ | 54–59$^{ab}$ | 2. 28–33$^{ab}$ |
| 2. 33$^{cd}$ | 2. 33$^{cd}$ | 59$^{cd}$ | 2. 33$^{cd}$ |
| 7* ( subst. 33$^{cd}$ ) | — | — | — |

| Crit. Ed. | Bom. Ed. | Cal. Ed. | Madras Ed. |
|---|---|---|---|
| 2. 34–37$^{ab}$ | 2. 34–37$^{ab}$ | 60–63$^{ab}$ | 2. 34–37$^{ab}$ |
| 8* | — | — | — |
| 2. 37$^{cd}$–39 | 2. 37$^{cd}$–39 | 63$^{cd}$–65 | 2. 37$^{cd}$–39 |
| 2. 40$^{ab}$ | 2. 40$^{ab}$ | 66$^{ab}$ | 2. $39\frac{1}{2}$ |
| 2. 40$^{cd}$–41$^{ab}$ | 2. 40$^{cd}$–41$^{ab}$ | 66$^{cd}$–67$^{ab}$ | 2. $40\frac{1}{2}$ |
| 2. 41$^{cd}$ | 2. 41$^{cd}$ | 67$^{cd}$ | 2. 41 |
| 2. 42 | 2. 42 | 68 | 2. 42 |
| 2. 43$^{ab}$ | 2. 43$^{ab}$ | 69$^{ab}$ | 2. $42\frac{1}{2}$ |
| 2. 43$^{cd}$ | 2. 43$^{cd}$ | 69$^{cd}$ | — |
| 9* ( subst. 43$^{cd}$ ) | — | — | 2. $43\frac{1}{2}^{ab}$ |
| 2. 44$^{ab}$ | 2. 44$^{ab}$ | 70$^{ab}$ | 2. $43\frac{1}{2}^{cd}$ |
| 2. 44$^{cd}$ | 2. 44$^{cd}$ | 70$^{cd}$ | 2. 44 |
| 2. 45–50 | 2. 45–50 | 71–76 | 2. 45–50 |
| 2. 51$^{ab}$ | 2. 51$^{ab}$ | 77$^{ab}$ | 2. $50\frac{1}{2}$ |
| 2. 51$^{cd}$–52$^{ab}$ | 2. 51$^{cd}$–52$^{ab}$ | 77$^{cd}$–78$^{ab}$ | 2. $51\frac{1}{2}$ |
| 2. 52$^{cd}$ | 2. 52$^{cd}$ | 78$^{cd}$ | 2. 52 |
| 2. 53–54 | 2. 53–54 | 79–80 | 2. 53–54 |
| 3. 1–5$^{cd}$ | 3. 1–5 | 81–85 | 3. 1–5 |
| 3. 5$^{ef}$ | 3. 6$^{ab}$ | 86$^{ab}$ | 3. $5\frac{1}{2}$ |
| 3. 6–10$^{cd}$ | 3. 6$^{cd}$–11$^{ab}$ | 86$^{cd}$–91$^{ab}$ | 3. $6\frac{1}{2}$–$10\frac{1}{2}$ |
| 3. 10$^{ef}$ | 3. 11$^{cd}$ | 91$^{cd}$ | 3. $11\frac{1}{2}^{ab}$ |
| 10* | — | — | 3. $11\frac{1}{2}^{cd}$ |
| 3. 11 | 3. 12 | 92 | 3. $12\frac{1}{2}$ |
| 3. 12$^{ab}$ | 3. 13$^{ab}$ | 93$^{ab}$ | 3. 13 |
| 3. 12$^{cdef}$ | 3. 13$^{cd}$–14$^{ab}$ | 93$^{cd}$–94$^{ab}$ | 3. 14 |
| 3. 13$^{ab}$ | 3. 14$^{cd}$ | 94$^{cd}$ | 3. 15$^{ab}$ |
| 11* | — | — | — |
| 12* | — | — | 3. 15$^{cd}$ |
| 3. 13$^{cd}$ | 3. 15$^{ab}$ | 95$^{ab}$ | 3. $15\frac{1}{2}$ |
| 3. 14–15 | 3. 15$^{cd}$–17$^{ab}$ | 95$^{cd}$–97$^{ab}$ | 3. $16\frac{1}{2}$–$17\frac{1}{2}$ |
| 3. 16$^{ab}$ | 3. 17$^{cd}$ | 97$^{cd}$ | 3. 18 |
| 3. 16$^{cdef}$ | 3. 18 | 98 | 3. 19 |
| 3. 17–26 | 3. 19–28 | 99–108 | 3. 20–29 |
| 3. 27 | 3. 29 | 109 | 3. 30 ( = 34 ) |
| 3. 28–30 | 3. 30–32 | 110–112 | 3. 31–33 |
| — | — | — | 3. 34 ( = 30 ) |
| 3. 31 | 3. 33 | 113 | 3. 35 |
| 3. 32$^{ab}$ | 3. 34$^{ab}$ | 114$^{ab}$ | 3. $35\frac{1}{2}$ |

| Crit. Ed. | Bom. Ed. | Cal. Ed. | Madras Ed. |
|---|---|---|---|
| 3. $32^{cd}$–$33^{ab}$ | 3. $34^{cd}$–$35^{ab}$ | $114^{cd}$–$115^{ab}$ | 3. $36\frac{1}{2}$ |
| 3. $33^{cd}$ | 3. $35^{cd}$ | $115^{cd}$ | 3. 37 |
| 3. 34–$38^{ab}$ | 3. 36–$40^{ab}$ | 116–$120^{ab}$ | 3. 38–$42^{ab}$ |
| 13* | — | — | — |
| 3. $38^{cd}$–41 | 3. $40^{cd}$–43 | $120^{cd}$–123 | 3. $42^{cd}$–45 |
| 14* | 3. 44 | 124 | — |
| 4. 1–2 | 4. 1–2 | 125–126 | 4. 1–2 |
| 4. $3^{ab}$ | 4. $3^{ab}$ | $127^{ab}$ | 4. $2\frac{1}{2}$ |
| 4. $3^{cdef}$ | 4. $3^{cd}$–$4^{ab}$ | $127^{cd}$–$128^{ab}$ | 4. $3\frac{1}{2}$ |
| 15* line 1 | 4. $4^{cd}$ | $128^{cd}$ | 4. 4 |
| 15* lines 2–3 | 4. 5 | 129 | 4. 5 |
| 16* | — | — | — |
| 4. 4–5 | 4. 6–7 | 130–131 | 4. 6–7 |
| 17* | 4. 8 | 132 | — |
| 4. 6–$7^{ab}$ | 4. 9–$10^{ab}$ | 133–$134^{ab}$ | 4. 8–$9^{ab}$ |
| 18* | — | — | — |
| 4. $7^{cd}$–$8^{ab}$ | 4. $10^{cd}$–$11^{ab}$ | $134^{cd}$–$135^{ab}$ | 4. $9^{cd}$–$10^{ab}$ |
| 4. $8^{cd}$ | 4. $11^{cd}$ | $135^{cd}$ | 4. $10^{cd}$ |
| 19* ( subst. $8^{cd}$ ) | — | — | — |
| 4. 9–$13^{cd}$ | 4. 12–16 | 136–140 | 4. 11–15 |
| 4. $13^{ef}$ | 4. $17^{ab}$ | $141^{ab}$ | 4. $15\frac{1}{2}$ |
| 4. $14^{abcd}$ | 4. $17^{cd}$–$18^{ab}$ | $141^{cd}$–$142^{ab}$ | 4. $16\frac{1}{2}$ |
| 4. $14^{ef}$ | 4. $18^{cd}$ | $142^{cd}$ | 4. 17 |
| 4. 15–19 | 4. 19–23 | 143–147 | 4. 18–22 |
| 5. 1–$5^{cd}$ | 5. 1–5 | 148–152 | 5. 1–5 |
| 5. $5^{ef}$ | 5. $6^{ab}$ | $153^{ab}$ | 5. $6^{ab}$ |
| 20* | 5. $6^{cd}$ | $153^{cd}$ | 5. $6^{cd}$ |
| 5. 6–$7^{ab}$ | 5. 7–$8^{ab}$ | 154–$155^{ab}$ | 5. 7–$8^{ab}$ |
| 21* | 5. $8^{cd}$ | $155^{cd}$ | — |
| 5. $7^{cdef}$ | 5. 9 | 156 | 5. $8^{cd}$–$9^{ab}$ |
| 5. $8^{ab}$ | 5. $10^{ab}$ | $157^{ab}$ | 5. $9^{cd}$ |
| 5. $8^{cd}$ | 5. $10^{cd}$ | $157^{cd}$ | 5. $9\frac{1}{2}$ |
| 22* | 5. $11^{ab}$ | — | — |
| 5. 9–$19^{ab}$ | 5. $11^{cd}$–21 | 158–$168^{ab}$ | 5. $10\frac{1}{2}$–$20\frac{1}{2}^{ab}$ |
| 5. $19^{cd}$ | 5. $22^{ab}$ | $168^{cd}$ | — |
| 5. $19^{ef}$–$20^{a}$ | 5. $22^{cd}$–$23^{a}$ | $169^{abc}$ | 5. $20\frac{1}{2}^{cd}$–$21\frac{1}{2}^{a}$ |
| 23* | — | — | — |
| 5. $20^{bcd}$ | 5. $23^{bcd}$ | $169^{d}$–$170^{ab}$ | 5. $21\frac{1}{2}^{bcd}$ |

9

| Crit. Ed. | Bom. Ed. | Cal. Ed. | Madras Ed. |
|---|---|---|---|
| 24* | 5. 24 | $170^{cd}$–$171^{ab}$ | 5. 22½ |
| 25* | — | — | — |
| 5. $21^{abcd}$ | 5. 25 | $171^{cd}$–$172^{ab}$ | 5. 23½ |
| 26* | 5. $26^{ab}$ | $172^{cd}$ | — |
| 5. $21^{ef}$ | 5. $26^{cd}$ | $173^{ab}$ | 5. 24 |
| 5. 22–$23^{ab}$ | 5. 27–$28^{ab}$ | $173^{cd}$–174 | 5. 25–$26^{ab}$ |
| 5. $23^{cd}$ | 5. $28^{cd}$ | $175^{ab}$ | — |
| 27* (subst. $23^{cd}$) | — | — | 5. $26^{cd}$ |
| 28* | — | — | — |
| 5. 24–25 | 5. 29–30 | $175^{cd}$–177 | 5. 27–28 |
| 5. 26–$29^{ab}$ | 5. 31–$34^{ab}$ | 178–$181^{ab}$ | 5. 29–$32^{ab}$ |
| 29* | — | — | — |
| 5. $29^{cd}$–34 | 5. $34^{cd}$–39 | $181^{cd}$–186 | 5. $32^{cd}$–37 |
| 30* | — | — | 5. 38 |
| 31* | — | — | — |
| 5. 35 | 5. 40 | 187 | 5. 39 |
| 32* | 5. 41 | 188 | 5. 40 |
| 5. 36 | 5. 42 | 189 | 5. 41 |
| 33* | — | — | — |
| 34* | — | — | — |
| 5. 37 | 5. 43 | 190 | 5. 42 |
| 35* | 5. 44–45 | 191–192 | — |
| 36* | 5. 46–47 | — | — |
| 37* | 5. 48 | — | 5. 43 |
| 38* | — | — | — |
| 39* | 5. 49 | — | — |
| 5. $38^{ab}$ | 5. $50^{ab}$ | $193^{ab}$ | 5. $44^{ab}$ |
| 40* | — | — | — |
| 5. $38^{cd}$ | 5. $50^{cd}$ | $193^{cd}$ | 5. $44^{cd}$ |
| 41* | — | — | 5. 45 |
| 42* | — | — | — |
| 43* | — | — | — |
| App. I, No. 1 | — | — | — |
| 44* | — | — | — |
| 5. 39 | 5. 51 | 194 | 5. 46 |
| 45* | — | — | 5. 47 |
| 46* | — | — | — |
| 47* | — | — | 5. 48–49 |

| Crit. Ed. | Bom. Ed. | Cal. Ed. | Madras Ed. |
|---|---|---|---|
| 48* | — | — | — |
| 49* | — | — | 5. $50^{ab}$ |
| 5. 40–41 | 5. 52–53 | 195–196 | — |
| 50* | 5. 54–55 | 197–198 | — |
| 5. $42^{ab}$ | 5. $56^{ab}$ | $199^{ab}$ | — |
| 5. $42^{cd}$ | 5. $56^{cd}$ | $199^{cd}$ | — |
| 51* (subst. $42^{cd}$) | — | — | — |
| 5. 43 | 5. 57 | 200 | 5. $50^{cd}$–$51^{ab}$ |
| 52* lines 1–3 | — | — | 5. $51^{cd}$–52 |
| 53* | — | — | — |
| 52* lines 4–5 | — | — | 5. 53 |
| App. I, No. 2 | — | — | — |
| 54* | — | — | — |
| 55* | — | — | — |
| 5. 44–$45^{ab}$ | 5. 58–$59^{ab}$ | 201–$202^{ab}$ | — |
| 5. $45^{cd}$–46 | — | — | — |
| 56* (for $45^{cd}$-$46^{d}$) | 5. $59^{cd}$–$60^{ab}$ | $202^{cd}$–$203^{ab}$ | — |
| 5. 47 | 5. $60^{cdef}$ | $203^{cd}$–$204^{ab}$ | — |
| 5. 48–$49^{ab}$ | 5. 61–$62^{ab}$ | $204^{cd}$–205 | — |
| 5. $49^{cd}$ | 5. $62^{cd}$ | 206 | — |
| 5. 50–52 | 5. 63–65 | 207–209 | — |
| 57* | 5. $66^{ab}$ | — | — |
| 58* | — | — | — |
| 5. 53 | 5. $66^{cdef}$ | 210 | — |
| App. I, No. 3 | — | — | — |
| 59* | — | — | — |
| 5. 54 | 5. 67 | 211 | — |
| 60* | 5. 68 | — | — |
| 61* | — | — | — |
| 62* | — | — | — |